# कर्मकाण्ड

## कक्षा ९ र १०

भाग १



श्री दामोदर कोइराला र श्री रामेश्वर भट्टराई

# कर्मकाण्डम्

## (व्यावसायिक)

## कक्षा ९ र १० (संयुक्त)

## (भाग एक)

लेखक
श्री दामोदर कोइराला
श्री रामेश्वर भट्टराई

प्रकाशक
जनक शिक्षा सामग्री केन्द्र लिमिटेड
सानो ठिमी, भक्तपुर



"राष्ट्रिय प्रतिभालाई फुलाउने, फलाउने
तथा जनताको मनोभावनालाई
विकासमूलक बनाउने नीति लिई लागू
गरिएको यस राष्ट्रिय शिक्षा
योजनाबाट केही वर्षभित्रै एउटा
जागरूक, परिश्रमी र उन्नतिशील
समाजको सिर्जना हुन सक्नेछ भन्ने
मैले आशा लिएको छु।"

–श्री ५ वीरेन्द्र

# हाम्रो भनाइ

शिक्षालाई जीवन सापेक्ष गराई राष्ट्रिय एकता, सार्वभौमिकता, राजमुकुट र स्वतन्त्रताको रक्षा गर्ने कर्तव्यनिष्ठ नागरिक तयार गराउने र सामाजिक जीवन यापनको लागि आवश्यक ज्ञान र सीप हासिल गराउने राष्ट्रिय शिक्षा पद्धतिको योजना २०२८ को विशुद्ध उद्देश्य अनुरूप विद्यालयस्तरका पाठक्रम र पाठ्यपुस्तकहरूको विकास गर्ने प्रक्रिया चालू रहिआएको छ ।

श्रमप्रति श्रद्धा जगाई उपयोगी नागरिक तयार गराउने र देशभक्ति, राजभक्ति तथा ईश्वरभक्ति सिकाई अनुसाशित सुयोग्य नागरिक तयार गराउने माध्यमिक शिक्षाको उद्देश्यमा आधारित संशोधित पाठ्यक्रम २०३८ अनुसार यो पाठ्यपुस्तक श्री दामोदर कोइराला र श्री रामेश्वर भट्टराईद्वारा लेखाई प्रकाशमा ल्याइएको छ ।

सम्बन्धित विषयका अनुभवी शिक्षक, प्राध्यापक एवं विशषज्ञहरूको सुझाव समेतलाई ध्यानमा राखी यस पाठ्यपुस्तकलाई सकेसम्म स्तरयुक्त बनाउने प्रयास गरिएको छ तापनि यसमा भाषागत, विषयगत, शैलीगत, कतिपय त्रुटिहरू अझ हट्न नसकेका होलान् । तिनका सुधारका लागि शिक्षक, अभिभावक, विद्यार्थी लगायत सबै बुद्धिजीवी पाठकहरूको सक्रिय सहयोगको महत्त्वपूर्ण भूमिका रहने हुँदा यस पवित्र सेवा कार्यमा यहाँहरूको रचनात्मक सुझावको यो केन्द्र सदैव स्वागत गर्दछ ।

२०४१, मंसीर

श्री ५ को सरकार
शिक्षा तथा संस्कृति मन्त्रालय
पाठ्यक्रम पाठ्यपुस्तक तथा निरीक्षण विकास केन्द्र
हरिहर भवन, पुल्चोक
ललितपुर, नेपाल ।

# विषय–सूची

श्री गणेशाय नमः । श्रीमङ्गलमूर्तये नमः ।

## (गणेशस्तुतिः)

ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशै तानि नामानि यः पठेच्छृणुयादपि ॥
विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे संकटे चैव विघ्नस्तस्य नजायते ॥
शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
अभीप्सितार्थ सिद्ध्यर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥

## यजुर्वेदीयस्वस्तिवाचनमन्त्राः

आनो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवानो यथा सदभिद्वृधे असन्नप्रायुतो रक्षितारो दिवे दिवे ॥१॥
देवानां भद्रासुमतिर्ऋजयतां देवानाꣳरातिरभि नो निवर्तताम् ।
देवानाꣳसख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥२॥
तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।
अर्यमणं वरुणꣳसोममश्विना सरस्वती नः सुभगामयस्करत् ॥३॥
तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।
तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना श्रृणुतं धिष्ण्यायुवम्॥४॥

तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वभवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धेः स्वस्तये ॥५॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति स्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥६॥
पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।
अग्निजिव्हा मनवः सूरचक्षसो विश्वेनो देवा अवसा गमन्निह ॥७॥
भद्रंकर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यसेमहि देवहितं यदायुः ॥८॥
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥९॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वेदेवा अदितिः पंचजना अदितिर्जातमदितिर्जनित्वम् ॥१०॥
द्यौःशान्तिरन्तरिक्षꣳशान्तिःपृथिवीशान्तिरापः शान्तिरोषधय
शान्तिः ।
वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳ
शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि ॥११॥
यतो यतः समीहसे ततो नो अभयं कुरु ।
शंनः कुरु प्रजाभ्यो भयन्नः पशुभ्यः ॥१२॥
सुशान्तिर्भवतु ॥

## खण्ड १

# अग्निवासविचारः

## (क) अग्निवासज्ञानम्

यदा होमस्य चिकीर्षा जायते तदा अग्निवासस्य विचारो विधेयः ।

अग्निवासवशेन होमकर्तुर्यजमानस्य शुभाशुभं फलं भवति । होमदिने अग्निः पृथिव्यां स्वर्गे पाताले वा कुत्र वसतीति अधो निर्दिष्टश्लोकाधारेण वा चक्राधारेण वा विचारः कर्तव्यः । अग्नि वासमविचार्य होमकरणे महान् दोषः फलवैपरीत्यं च जायते इति शास्त्रीयः शिद्धान्तः । परं काम्यकर्मण्येव एतद्विचार्यते न तु नित्ये नैमित्तिके च कर्मणि । अतः अग्निवासवशेन शुभाशुभ फलज्ञानाय श्लोकश्चक्रं चाधः प्रस्तूयते –

**श्लोको यथा**

**सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वन्हिवासः ।**
**सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च ॥**

मु. चिं. नक्षत्र प्र. ३६ श्लोकः ।

होमदिनस्य तिथिसंख्यामादाय तत्र एकं संयोज्य तत्रैव वारसंख्यां च संयोज्य चतुर्भिर्विभजेत् । शून्यशेषे त्रिशेषे च अग्नेर्वासः पृथिव्यां भवति, अग्निः पृथिव्यां वसतीत्यर्थः । तस्मिन्दिने होमे कृते होमकर्तुर्यजमानस्य सौख्यं फलं भवति । एकशेषे सति तस्मिन् दिने अग्नेर्वासः स्वर्गे भवति । तस्मिन् दिने होमे कृते यजमानस्य मृत्युर्भवति । द्विशेषदिवसे अग्नेर्वासः पाताले भवति । तस्मिन् दिने होमे कृते यजमानस्य अर्थनाशो भवति ।

शुक्लपक्षे केवलं तिथ्यनुसारेण तिथिसंख्यामादाय गणना विधेया, तत्र कोऽपि विशेषविधिर्नास्ति कृष्णपक्षे तु सामान्यतिथिसंख्यायां पञ्चदशसंख्यामधिकं संयोज्य तिथिसंख्या गणयितव्या ।

**शुक्लपक्षे उदाहरणं यथा**

(वैशाखशुक्लपञ्चम्यां बुधवासरे होमं कर्तुं भवति न वेत्यत्र विचार्यते)

**वैशाखशुक्लपञ्चमी ५ अत्र एकसंयोगे ५ + १ = ६ भवति ।**
**बुधवासरसंख्या ४ अस्यापि संयोगे ६+४=१० भवति ।**
**अस्य चतुर्भिर्विभाजिते १०÷४=२ लब्धिः, २ शेषः अभूत् ।**

द्विशेषे अग्नेर्वासः भूतले=पाताले भवति, अस्य फलमर्थनाशः ।
अतः वैशाखशुक्लपञ्चम्यां बुधवासरे होमं कर्तुं न भवतीति सिद्धम् ।

द्वितीयमुदाहरणम्

(वैशाखशक्लषष्ठ्यां बृहस्पतिवासरे होमं कर्तुं भवति न वेति विचार्यते)

वैशाखशुक्लषष्ठी ६ अत्र एकसंयोगे ६+१=७ भवति ।
बृहस्पतिवासरसंख्या ५ अस्यापि संयोगे ७+५=१२ भवति ।
अस्य चतुर्भिर्विभाजिते १२÷४=३ लब्धिः,० शेषः अभूत् ।
० (शून्य) शेषे अग्नेर्वासः पृथिव्यां भवति । अस्य फलं सौख्यमुक्तम् ।
अतः वैशाखशुक्लषष्ठ्यां बृहस्पतिवासरे होमं कर्तुं भवतीति सिद्धम् ।

तृतीयमुदाहरणम्

(ज्येष्ठकृष्णदशम्यां भौमवासरे भवति न वेत्यत्र विचार्यते)

(कृष्णपक्षे पञ्चदशसंख्या अधिकं योजनीयमिति च विचारणीयम् ।)
ज्येष्ठकृष्णदशमी १० एकसंयोगे १०+१=११ भवति ।
भौमवासरसंख्या ३ अस्यापि संयोगे ११+३=१४ भवति ।
पुनश्च पञ्चदशसंख्या योगे १४+१५=२९ भवति ।
अस्य चतुर्भिर्विभाजिते २९÷४=७ लब्धिः, १ शेषः अभूत् ।
एकशेषे अग्नेर्वासः दिवि=स्वर्गे भवति । अस्य फलं मृत्युः ।
अतः अस्मिन् दिने होमं कर्तुं न भवतीति सिद्धम् ।
(इति श्लोकाधारेण अग्निवासविचारः ।)

अतः परं चक्राधारेण अग्निवासज्ञानाय चक्रं प्रस्तूयते

# अग्निवासचक्रम्

## अग्निवाससारिणी

शुक्लपक्षे | कृष्णपक्षे

| तिथि: | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | कृ. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| आ. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | सो. |
| सो. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | मं. |
| मं. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | बु. |
| बु. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | बृ. |
| बृ. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | शु. |
| शु. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | श. |
| श. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | × |
| × | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | स्व. | पा. | भू. | भू. | आ. |

(१) भू इति भुवि = पृथिव्यां अग्निवास इत्यर्थः । होमे सौख्यं फलम् ।

(२) स्व इति स्वर्गे अग्निवासः । होमे फलं प्राणनाशः ।

(३) पा इति पाताले = अग्निवासः । होमे फलं अर्थनाशः ।

॥ इति अग्निवासविचारः ॥

**शब्दार्थः**

| | | |
|---|---|---|
| १– चिकीर्षा | = | गर्ने इच्छा |
| २– नित्यकर्म | = | नित्य गर्नुपर्ने सन्ध्योपासन, पाञ्चायन पूजा, बलिवैश्वदेव, पञ्चमहायज्ञ आदि । |
| ३– नैमित्तिककर्म | = | निमित्त परिआएमा गर्नुपर्ने छोराछोरीको जातकर्म, व्रतबन्ध, विवाह आदि । |
| ४– काम्यकर्म | = | कामना विशेषले गरिने विष्णुयज्ञ, रुद्रयज्ञ, प्रतिष्ठा आदि । |

## अभ्यासः

**प्रश्नाः**

१– कर्माणि कति विधानि भवन्ति ? इति स्पष्टीक्रियताम् ।

२– नैमित्तिकहोमे अग्निवासफलं विचार्यते न वेति ? विचार्यताम् ।

३– स्वर्गे अग्निवासे सति होमो भवति न वेत्यत्र विचारणीयः ।

४– शून्यशेषदिवसे होमे कृते यजमानः कीदृशं फलं लभते इति विचार्यताम् ।

# सामान्यहोमविधिः

## (अग्निस्थापनम्)

(कर्मपात्र विधाय कर्म कर्तव्यम् । अतः सर्वकर्मादौ कर्मपात्रनिर्माणविधिः प्रस्तूयते)

## कर्मपात्रनिर्माणविधिः

ॐ यद्देवा देवहेडनं देवासश्चकृमा वयम् । अग्निर्मा तस्मा देनसो विश्वान्मुञ्चत्वꣳ हसः ॥

ॐ यदि दिवायदि नक्तमेना ꣳ सि चकृमावयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः ।

ॐ यदि जाग्रद्यदि स्वप्नऽएनाꣳसि चकृमावयम् । सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः ।

इति देवानावाह्य,

ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्यरश्मिभिः । देवीरापोऽअग्रेगुवोऽअग्रेपुवोग्रऽइममद्य यज्ञन्नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवम् ॥

इति मन्त्रेण पवित्रं क्षिपेत् ।

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥

इति जलम् ।

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपव्हये श्रियम् ॥

इति गन्धम् ।

ॐ अक्षन्नमीमदन्त ह्यवप्रियाऽअधूषत । अस्तोषत स्वभानवो विप्रा नविष्टया मती योजान्विन्द्र ते हरी ॥

इति अक्षतान् ।

ॐ यवोसि यवयास्मद्द्वेषो यवयारात्रीर्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा । शुन्धन्ताँल्लोकाः पितृषदनः पितृषदनमसि ॥

इति यवान् ।

ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् प्रिणाहि नः स्वाहा ॥

इति तिलान् ।

ॐ श्रीश्च ते लक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणा मुम्मऽइषाण सर्वलोकम्मऽइषाण ॥

इति पुष्पं क्षिपेत् ।

ततः कुशत्रयसहितं कर्मपात्रोदकमादाय

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।

यःस्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

इति पूजाद्रव्याणि आत्मानं च सिञ्चेत् ।

(इति कर्मपात्रनिर्माणविधिः )

।। श्री मङ्गलमूर्तये नमः ।।

# अथाग्निस्थापनविधिः[१]

## (क) पञ्चभूसंस्कारः[२]

भूरसीति भूमिशोधनम्

**ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीन्दृꣳ पृथिवीं मा हिꣳसीः ।।**

---

१– होम गर्ने कहाँ र कसरी, भन्ने प्रश्नमा यहाँ र यसरी भनी मार्गनिर्देशन गर्ने विधि-विशेषलाई होमविधि र सबै किसिमका स्मार्त कर्महरूमा सर्वसाधारणरूपले गरिने होम विधिलाई सामान्य होमविधि भनिन्छ। यसै अन्तर्गतको कुण्ड वा स्थण्डिल (होमवेदी) बनाएर त्यसमा अग्निको स्थापना गरी सामान्यरूपले होम गर्ने पद्धतिलाई "अग्निस्थापना" भन्दछन् ।

हाम्रो वैदिक धर्म अनुसार शान्तिक, पौष्टिक संस्कार आदि कर्महरू जे जति चलिआएका छन् तिनमा विशेष गरेर जातकर्म, नामकरण, अन्नप्राशन, चूडा, उपनयन, विवाह आदि संस्कार, ग्रहशान्ति, विनायकशान्ति, श्रीशान्ति, ऋतुशान्ति, मूलशान्ति आदि शान्तिक र तुलसीको होम, विष्णुयाग, रुद्रयाग, व्रतप्रतिष्ठा, देवप्रतिष्ठा आदि पौष्टिक कर्महरू गर्दा अग्निस्थापनाको विधि अनुसार होम गर्ने प्रचलन छ । अन्यत्र शाखान्तरहरूमा वा हाम्रो आफ्नै सूत्रसंग समेत केही कुरामा भिन्नता जस्तो देखिए तापनि नेपाली परम्परामा हाम्रो पूर्वज विद्वान्हरूले यसै "अग्निस्थापना" पद्धतिलाई मान्यता दिई कर्म गर्दै आएकाले हामी पनि उनीहरूकै अनुसरण गर्दै सोही पद्धतिलाई यथासम्भव स्पष्ट र सरलरूपमा प्रस्तुत गर्दछौं ।

२– भूमि स्वभावैले पवित्र छन् तापनि संस्कार नगरिएको भूमिमा यज्ञ गर्न योग्य मानिदैन । यस कारण बढार्नु, लिप्नु, रेखा कोर्नु, रेखाबाट माटो झिक्नु, जलले सेचन गर्नु आदि संस्कार-हरूद्वारा भूमिलाई विशेष पवित्र र यज्ञ गर्न योग्य बनाइन्छ ।भूमिको संस्कारदेखि लिएर कुश-कण्डिकाका सारा संस्कारहरू सूत्रमा मन्त्ररहित केवल विधि मात्र बताइएको भए तापनि हाम्रो पद्धतिमा मन्त्रसहित गर्ने परम्परा भैरहेकोले यहाँ पनि सबै विधिहरू मन्त्रसहित प्रस्तुत गरिएका छन् ।

अश्मा च म इति मृत्तिकास्थापनम्

ॐ अश्मा च मे मृत्तिका च मे गिरयश्चमे पर्वताश्चमे सिकताश्चमे वनस्पतयश्च मे हिरण्यञ्च मे यश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥

एष वस्तोमेति दर्भं गृह्णाति

ॐ एष वस्तोमो मरुतऽइयङ्गीर्मान्दार्यस्य मान्यस्य कारोः। एषायासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥

यद्देति दर्भैः परिसमूहनम्

ॐ यद्देवा देवहेडनं देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ॥

मा नस्तोक इति उपलेपनं गोमयेन

ॐ मानस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः। मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥

त्वामिद्धीत्युल्लिख्य स्रुवेण

ॐ त्वामिद्धि हवामहे सातौ वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥

प्रथमाद्वितीयैरित्यादिभिः प्रागग्रमुदक्संस्थं रेखात्रयं खादिरेण हस्तमात्रेण खड्गाकृतिना स्फयेन स्रुवमूलेन वा कुर्यात्

ॐ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूꣳषि सामभिः सामान्यृग्भिर्ऋचः

पुरोनुवाक्याभिः पुरोनुवाक्या याज्याभिर्याज्या वषट्कारैर्वषट्-
काराऽआहुती भिराहुतयो मे कामान्त्समर्धयन्तु भूः स्वाहा ॥

ॐ दक्षिणामारोह त्रिष्टुप्त्वावतु वृहत्साम पञ्चदशस्तोमो
ग्रीष्मऽऋतुः क्षत्रं द्रविणम् ॥

ॐ प्रतीचीमारोह जगती त्वावतु वैरूपꣳसाम सप्तद-
शस्तोमो वर्षाऽऋतुर्विड् द्रविणम् ॥

ॐ उदीचीमारोहानुष्टुप्त्वावतु वैराजꣳसामैकविꣳ
शस्तोमः शरदृतुः फलं द्रविणम् ॥

सदसस्पतिमित्यनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो रेखाभ्यस्त्रिरुद्धरणम्

ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधा-
मयासिषꣳस्वाहा ॥

व्रतङ्कृणुतेति वेद्यां स्रुवेणोद्धृतयांसूननामिकाङ्गुष्ठाभ्यामुद्धृत्य तानैशान्यां क्षिपेत्

ॐ व्रतं कृणुत व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्य-
ज्ञियः । दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवा-
हसꣳसुतीर्था नोऽअसद्वशे । ये देवा मनो जाता मनोयुजो
दक्षक्रतवस्ते नोवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥

शन्नो देवीरित्यभ्युक्ष्य

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योर-
भिस्रवन्तु नः ॥

(इति पंचभूसंस्काराः)

## (ख) अथ स्वस्तिवाचनम्

ॐ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषाऽअसुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥
स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिꣳसर्वगणꣳ स्वस्तये स्वस्तयऽआदित्यासो भवन्तु नः ॥
विश्वेदेवा नोऽअद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवाऽअभवन्त्वृभव स्वस्तये स्वस्ति नो रुद्रः पात्वꣳहसः ॥
स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।
स्वस्ति नऽइन्द्रश्चाग्निश्च स्वस्ति नोऽअदिते कृधि ॥
स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव ।
पुनर्ददताघ्नता जानता सङ्गमेमहि ॥
स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् ।
असुरघ्नमिन्द्रसखं समत्सु वृहद्यशो नावमिवारुहेम ॥
अꣳहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् ।
प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नोऽअस्तु ॥

"ततः आशुः शिशानः" इति समग्रं पठेत् ।

( इति स्वस्तिवाचनमन्त्रान् पठन् रङ्गवल्लीं रचयेत् )


उत्तर:
प्रणीतापात्रम्
प्रोक्षणी पात्रम्
वायव्यकलश:
अर्घ:
ईशानकलश:
गणेश:
पश्चिम:
होतुरासनम्
पूर्व:
दीप:
पूर्वकलश:
नैऋत्यकलश:
आग्नेयकलश:
ब्रह्मा
दक्षिण:

## (ग) अष्टदिक्षु पूर्वादिक्रमेण मध्यभागे च पूजनम्

पृथिव्याः सधस्थादिति पूर्वे

ॐ पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभराग्निं पुरीष्यमङ्गिरस्वदच्छेमोग्निं पुरीष्यमङ्गिरस्वद् भरिष्यामः ॥

अग्निश्चेति दक्षिणे

ॐ अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षञ्च सन्नते ते मे सन्नमतामद आदित्यश्च द्यौश्च सन्नते ते मे सन्नमतामदऽआपश्च वरुणश्च सन्नते ते मे सन्नमतामदः सप्तसꣳसदोऽअष्टमी भूतसाधनी सकामाँ २ऽ अध्वनस्कुरु संज्ञानमस्तु मेमुना ॥

वायो ये त इति पश्चिमे

ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये ॥

सोमो धेनुमित्युत्तरे

ॐ सोमो धेनुꣳसोमोऽअर्वन्तमाशुꣳसोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यꣳसभेयं पितृश्रवण यो ददाशदस्मै ॥

अग्निन्दूतमित्याग्नेये

ॐ अग्निन्दूतं पुरोदधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह ।

कया नश्चित्र इति नैर्ऋत्याम्

ॐ कया नश्चित्रऽआभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥

वायुरनिलमिति वायव्ये

ॐ वायुरनिलममृतमथेदं भस्मान्तꣳशरीरम् । ॐ क्रतो स्मर क्लिबेस्मर कृतꣳ स्मर ॥

ईशावास्यमित्यैशान्याम्

ॐ ईशावास्यमिदꣳसर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥

ततस्तिसृभिर्मध्ये

ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ२ऽ अजस्रम् । तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन् विश्वा भुवनानि गोपाः ॥

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयꣳस्याम पतयो-रयीणाम् ॥

ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधा-मयासिषꣳस्वाहा ॥

## (घ) इन्धनशोधनं स्थापनं च

कस्त्वा सत्य इतीन्धनं शोधयेत्

ॐ कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढाचि दारुजे वसु ॥

त्वामिद्धीति दारुकं स्थापयेत् १

ॐ त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥

## (ङ) अग्निसंस्कारः, स्थापनं च

तत्र अग्नावग्निरित्यग्निं शोधयेत्

ॐ अग्नावग्निश्चरति प्रविष्टऽऋषीणां पुत्रोऽअभि शस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहा ॥

मयि गृह्णामीति मन्त्रेण कांस्यपात्रे निहितं कांस्यपात्रेण पिहितमग्निं गृह्णाति

ॐ मयि गृह्णाम्यग्नेऽअग्निꣳरायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मामु देवताः सचन्ताम् ॥

गर्भोऽअस्योषधीनामिति गर्भाधानम्

ॐ गर्भोऽअस्योषधीनां गर्भो वनस्पतीम् । गर्भो विश्वस्य भूतस्याग्ने गर्भोऽअपामसि ॥

---

१– पञ्च त्रीणि तथा त्रीणि पुनः पञ्च विधानतः । इति क्रमेण दारुकं स्थापयित्वा योनिं च कारयेत् ।

इत्यस्याग्नेर्गर्भाधानं करोमि ।
विवस्वन्नादित्य इति पुंसवनम्

ॐ विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व ।
श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः ।
पुमान् पुत्रो जायते विन्दते वस्वधा विश्वाहारपऽएधते गृहे ॥

इत्यस्याग्नेः पुंसवनं करोमि ।
अजीजनोहीति सीमन्तोन्नयनम्

ॐ अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरयारꣳहमाणः पुरन्ध्या ॥

इत्यस्याग्नेः सीमन्तोन्नयनं करोमि ।
एजतु दशमास्य इति जातकर्म

ॐ एजतु दशमास्यो गर्भो जरायुणा सह । यथायं वायुरे-
जति यथा समुद्रऽएजति । एवायं दशमास्योऽअस्रज्जरायुणा सह ॥

इत्यस्याग्नेर्जातकर्म करोमि ।
(अत्र पिहितकांस्यपात्रस्योद्घाटनम्)
यदा पिपेषेति नामकरणम्

ॐ यदा पिपेष मातरं पुत्रः प्रमुदितो धयन् । एतत्तदग्नेऽ
अनृणो भवाम्यहतौ पितरौ मया । सम्पृचस्थ संमा भद्रेण पृङ्क्त
विपृच स्थ वि मा पाप्मना पृङ्क्त ॥

इत्यस्याग्नेर्नामकरणं करोमि ।
पूषा पञ्चाक्षरेणेति निष्क्रमणम्

ॐ पूषापञ्चाक्षरेण पञ्चदिशऽउदजयत्ताऽउज्जेषᳬसविता षडक्षरेण षड्तूनुदजयत्तानुज्जेषं मरुतः सप्ताक्षरेण सप्तग्राम्यान्पशूनुदजयँस्तानुज्जेषं बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम् ।

इत्यस्याग्नेर्निष्क्रमणं करोमि ।

अन्नपतेन्नस्येति अन्नप्राशनम्

ॐ अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्रप्रदातारं तारिषऽऊर्जं नो धेहि द्विपदे चतुष्पदे ॥

इत्यस्याग्नेरन्नप्राशनं करोमि ।

अग्न आयाहीति चूडाकरणम्

ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये। निहोता यस्य बर्हिषि ॥

इत्यस्याग्नेश्चूडाकरणं करोमि ।

भद्रं कर्णेभिरिति कर्णवेधः

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥

इत्यस्याग्नेः कर्णवेधं करोमि ।

अग्निरेकाक्षरेणेति उपनयनम्

ॐ अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्यानुदजयतां तानुज्जेषं विष्णुस्त्र्यक्षरेण त्रीँल्लोकानु-

दजयत्तानुज्जेषꣳसोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम् ॥

इत्यस्याग्नेरुपनयनं करोमि ।

तयोर्व्याहृतिसहितां गायत्रीं श्रावयेत्

ॐ भूर्भुवः स्वः वैश्वानराय विद्महे सप्तजिह्वाय धीमहि । तन्नो अग्निः प्रचोदयात् ॥

व्रतं कृणुतेति समावर्तनम्

ॐ व्रतं कृणुत व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः । दैवीन्धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुतीर्थानोऽअसद्वशे । ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥

इत्यस्याग्नेः समावर्तनं करोमि ।

गावऽउपावतेति गोदान कर्म

ॐ गावऽउपावतावतं मही यज्ञस्य रप्सुदा । उभा कर्णा हिरण्यया ॥

इत्यस्याग्नेर्गोदानकर्म करोमि ।

भगऽएवेति विवाहः

ॐ भगऽएव भगवाँ२ऽअस्तु देवास्तेन वयं भगवन्तः स्याम । तन्त्वा भग सर्वऽइज्जोहवीति स नो भगपुरऽएता भवेह ॥

इत्यस्याग्नेर्विवाहं करोमि ।

तत ऋतावानमित्यादि कण्डिकात्रयं पठेत्

ॐ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्ं घर्ममीमहे । उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥

ॐ वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्री इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण ।
उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥

ॐ वैश्वानरो नऽऊतयऽआप्रयातु परावतः । अग्निरुक्थेन वाहसा । उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा ॥

इति पठित्वा अग्निर्मूर्धेति मन्त्रेण कुण्डे स्वाभिमुखं वन्हि प्रवेशयेत्

ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाँ रेताँ सि जिन्वति ॥

इति कुण्डे स्थण्डिले वा अग्नि स्थापयेत्
स्थिरो भवेति प्रज्वालयेत्

ॐ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥

ततोऽग्नि प्रार्थयेदनेन मन्त्रेण

ॐ आवाहये त्वां पुरुषं महान्तं सुरासुरैर्वन्दितपादपद्मम् ।
ब्रम्हादयो यस्य मुखे वसन्ति विशस्व[1] कुण्डे सुरलोकनाथ ॥

---

१– 'प्रविश्य' यस्तो पाठ धेरै पुस्तकहरूमा पाइन्छ ।

ततोग्नेर्दक्षिणतस्त्रिभिर्दर्भैर्ब्रम्हासनमास्तीर्य१ हिरण्यगर्भ इतिपञ्चाशद्भिः कुशैर्ब्रह्मपवित्रकरणम्२

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

आ ब्रह्मन्निति ब्रह्माणमग्निप्रदक्षिणं कारयित्वा "अस्मिन् कर्मणि त्वं मे ब्रह्मा भव" इत्युक्त्वा उदङ्मुखमुपवेशयेत्३

ॐ आ ब्रम्हन् ब्राम्हणो ब्रम्हवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वा-नाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलव-त्यो नऽ ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

यस्य कूर्म इति होतुरासनम्

ॐ यस्य कूर्मो गृहे हविस्तमग्ने वर्धया त्वम् । तस्मै देवाऽअधिब्रुवन्नयञ्च ब्रम्हणस्पतिः ॥

---

१– प्रायः प्रचलित पुस्तकहरूमा 'षड्दर्भैब्रह्मासनम् वा ब्रह्मपवित्र करणम्' भन्ने यस्तो पाठ पाइन्छ तापनि "ब्रह्माचार्यप्रणीतानामासनञ्च त्रिभिः कुशैः । न द्वाभ्यां नैकदर्भेण ऋषयो बहवो विदुः॥" अग्निगृह्यग्रन्थमा यस्तो वचन भएको र श्रौतयज्ञमा पनि 'षडासनानि' भनेर ब्रह्मा यजमान प्रणीता अध्वर्युहरूको आसन राख्दा ३।३ कुशको आसन राख्ने परम्परा भएको हुँदा ३ कुशकै आसन राख्नु उचित देखिन्छ ।

२– "पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः । दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः" यस्तो वचन भएकोले ५० कुशको दायाँतिरबाट घुमाएर पवित्र ग्रन्थि बनाएको ब्रह्मा र २५ कुशको बायाँतिरबाट घुमाएर पवित्र ग्रन्थि बनाएको विष्टर हुनुपर्दछ ।

३– 'यदा ब्रह्मा न भवति तदा कौशः कार्यः' इति हरिहरः । ब्रह्मा कौशश्चेत् तदा प्रैषानुप्रैषौ न भवतः ।

अग्ने प्रेहीति अग्नेरुत्तरतो यजमानासनम्[1]

**ॐ अग्ने प्रेहि प्रथमो देवयताञ्चक्षुर्देवानामुत मर्त्यानाम्। इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति ॥**

परीत्य भूतानीति अग्नेरुत्तरतो वायव्ये च प्रणीतार्थे आसनद्वयं कल्पयित्वा प्रणीताग्न्योर्मध्ये प्रोक्षण्यासनं च निदध्यात्

**ॐ परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च। उपस्थाय प्रथमजामृतस्यात्मनात्मान मभिसंविवेश ॥**

तत इन्द्रऽआसामिति वारणं तच्च दण्डेनसह द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं-चतुरङ्गुलखातं प्रणीतापात्रं वामहस्तेनादाय

**ॐ इन्द्रऽआसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः। देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥**

---

१– प्रचलित पद्धतिहरूमा 'अग्नेर्दक्षिणतो ब्रह्मसमीपे यजमानासनम्, अर्थात् यजमानको आसन अग्निको दक्षिणतिर ब्रम्हाको नजीकमा राख्ने क्रम देखिन्छ। तर 'उत्तरतः उपचारो यज्ञः' अर्थात् उत्तरतिर बसेर यज्ञको सेवा गर्नू। यस वचन अनुसार स्मार्तयज्ञमा सर्वत्र यजमानको आसन अग्निको उत्तरतिर हुनुपर्दछ। दर्शपूर्णमास आदि श्रौतयज्ञमा मात्र दक्षिणतिर हुन उपयुक्त छ। कारण–"दक्षिणतो ब्रम्हयजमानयोरासने" (का. श्रौ. सू. अ. १ क ८ सू. २७) अर्थात् ब्रम्हा र यजमानको आसन अग्निको दक्षिणतिर हुनुपर्छ। यो श्रौतयज्ञलाई लिएर विधान गरिएको कुरा हो र यसै वचनका आधारमा स्मार्तयज्ञमा पनि ब्रम्हा यजमान दुवैको आसन अग्निको दक्षिणतिर स्वतः प्राप्त हुन्छ। यसरी दुवैको आसन दक्षिणतिर प्राप्त हुँदाहुँदै फेरि गृह्यसूत्रमा आएर यजमानको आसनको उल्लेखै नगरी "दक्षिणतो ब्रह्मासनमास्तीर्य" (पा. गृ. सू. का. १ कं. १ सू. २) दक्षिणतिर ब्रह्माको आसन हुनुपर्छ भनेर किन भन्नुपर्थ्यो।

अतः यसबाट स्पष्ट हुन्छ कि श्रौतयज्ञमा मात्र यजमानको आसन दक्षिणतिर हुन्छ, स्मार्तयज्ञमा दक्षिणतिर नभएर उत्तरैतिर हुनुपर्छ। यस विषयमा गृह्यसूत्रको कुशकण्डिकाको भाष्यमा आचार्य गदाधरले विस्तृत शास्त्रार्थपूर्वक स्पष्ट गरेका छन्।

उदुत्तममिति दक्षिणहस्तेनोदकं संपूर्य वायव्यासने निधाय दक्षिणानामिकयाऽऽलभ्य कुशैराच्छाद्य ब्रम्हणो मुखमवलोक्य प्रणीतापात्रं प्रणीतासने निदध्यात्

**ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमᳫं श्रथाय। अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम ॥**

ततो ये ते शतमिति बर्हिर्मुष्टिमादाय ईशानादिप्रागग्रैर्बर्हिर्भिरुदक्संस्थमग्नेः परिस्तरणं कुर्यात्[1]

**ॐ ये ते शतं वरूणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥**

---

१– परिस्तरणम् = बर्हि राख्नु अर्थात् अग्निको वरिपरि कुशको टुप्पो पूर्वतिर पारेर ईशानदेखि उत्तरसम्म ओच्छयाइदिनु तर यहाँ प्रचलित सबैजसो अग्निस्थपनाहरूमा बर्हि राख्ने यस्तो क्रम पाइन्छ– "बर्हिषो मुष्टिमादाय चतुर्धा विभज्यैकैकेन भागेन आग्नेयादीशानान्तमुत्तराग्रम्, ब्रह्मणोऽग्निपर्यन्तं पूर्वाग्रम् नैर्ऋत्याद्वायव्यान्तमुत्तराग्रम्: अग्नितः प्रणीतापर्यन्तं पूर्वाग्रं कुशैः परिस्तृणीयात्"।

हामीले यसको प्रथम संस्करणमा पनि यही पाठ राखेका थियौं। यसलाई परिवर्तननगरी कुशकण्डिका भाष्यमा हरिहरको कारिकाको र हाम्रै नेपाली परम्पराको सत्कर्मरत्नावलीको अधारमा माथि मूलमा भएको पाठ राखिएको छ।

# (च) अथ पात्रासादनम्[1]

तत्वा यामीति मन्त्रं पठित्वा यावद्भिः पदार्थैः प्रयोजनं भवति तावतः पदार्थान् द्वन्द्वशः प्राक्संस्थानुदगग्रानग्नेरुत्तरतः पश्चाद्वाऽऽसादयेत्

**ॐ तत्त्वा यामि ब्रम्हणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्यरुशꣳ स मा नऽ आयुः प्रमोषीः ॥**

त्र्यम्बकमिति पवित्रच्छेदनार्थानि प्रादेशपरिमितानि त्रीणि कुशतरुणानि दृढानि

**ॐत्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिवबन्धना-न्मृत्योर्मुक्षीय मामृतात् ॥**

---

१– पात्रासादनम् = यज्ञमा आवश्यक यज्ञपात्र र अन्य वस्तुहरू क्रम मिलाएर ठीक पारेर राख्नु । पात्रासादनको अर्थ केवल पात्रहरू ठीक पार्नु मात्र होइन यो यज्ञको एक अङ्ग पनि हो । याज्ञिकहरू पात्रासादन न भएको यज्ञलाई विधिच्युत या अङ्गहीन भएको मान्दछन् । यसैले यज्ञमा पात्रासादन भएको हुनुपर्छ । पात्रासादनको क्रम कारिकामा यस प्रकार बताइएको छ ।

"आसादनं तु पात्राणां प्रदेशान्तरके बुधः ।
अङ्गुलद्वयमानेन द्वन्द्वं द्वन्द्वान्तरे न्यसेत् ॥
पश्चादुत्तरतो वा स्यात् पात्रासादनमग्नितः ।
उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत् ॥
त्यस्तै कात्यायनले पनि भनेका छन् –
"प्राञ्चप्राञ्चमुदगग्नेरुदगग्रं समीपतः "

अर्थात् अग्निको पश्चिमतिर वा उत्तरतिर जोडा जोडा मिलाएर राख्नू । एक जोडामा २ अङ्गुलको फरक होस् र एक जोडाबाट अर्को जोडा एक कुरेतको फरक होस् ।

अग्निको पश्चिमतिर पात्रासादन गर्ने भएमा दक्षिणबाट आरम्भ गरेर उत्तरतिर समाप्ति गर्नुपर्छ र पात्रहरूको अग्रभाग पूर्वतिर पार्नुपर्छ । अग्निको उत्तरतिर पात्रासादन गरेमा पश्चिम-बाट आरम्भ गरेर पूर्वमा समाप्ति गर्नू । पात्रको अग्रभाग उत्तरतिर पार्नुपर्छ ।

ततः पवित्रे कृत्वा

पवित्रे स्थ इति पवित्रकरणार्थं साग्रेऽनन्तर्गर्भे द्वे कुशतरुणे

ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । देवीरापोऽअग्रेगुवोऽअग्रेपुवोग्रऽइममद्य यज्ञं नयताग्रे यज्ञपतिꣳसुधातुं यज्ञपतिं देवयुवम् ॥

इमं मे वरुण इति वारणं द्वादशाङ्गुलदीर्घं करतलसम्मितखातं पद्मपत्राकृति कमलमुकुलाकृति वा प्रोक्षणीपात्रम् (न्युब्जम्)

ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥

घृतवतीति तैजसी मृन्मयी वा द्वादशाङ्गुलविस्तृता प्रादेशोच्चा आज्यस्थाली

ॐ घृतवती भुव नानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥

अन्नपतेन्नस्येति तादृश्येव चरुस्थाली

ॐ अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्रदातारं तारिषऽऊर्जं नो धेहि द्विपदे चतुष्पदे ॥

ततः शादन्दद्भिरिति सम्मार्जनकुशास्त्रिप्रभृतयः

ॐ शादं दद्भिरवकान्दन्तमूलैर्मृदं वस्वैँस्तेगान्दꣳष्ट्राभ्याꣳ सरस्वत्याऽअग्रजिह्वं जिह्वायाऽउत्सादमवक्रन्देन तालु वाजꣳहनुभ्यामपऽआस्येन वृषणमाण्डाभ्यामादित्वाँ२ ॥ श्मश्रुभिः पन्थानं भ्रूभ्यां द्यावापृथिवी वर्तोभ्यां विद्युतङ्कनीनकाभ्याꣳशुक्लाय स्वाहा कृष्णाय स्वाहा पार्याणि पक्ष्माण्यवार्याऽइक्षवोवार्याणि पक्ष्माणि पार्याऽइक्षवः ।

उपयामगृहितोसीति उपयमनकुशास्त्रयोदश

ॐ उपयामगृहीतोस्यन्तर्यच्छ मघवन् पाही सोमम् । उरूष्य रायऽ एषोयजस्व ।।

समिधाग्निमिति समिधस्तिस्: पालाश्य: प्रादेशमात्र्य: पृथक् स्थापयेत्

ॐ समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ।।

स्रुव: खादिरो हस्तेमात्रोऽङ्गुष्ठपर्वमात्रखात: परिणाहवर्तुलपुष्कर: (न्युब्ज:) । गव्यम् आज्यम् । चरुश्चेत् त्रिप्रक्षालिप्ता: ब्रीहितण्डुला: । पूर्णपात्रम्– (षट् पञ्चाशदधिकशतद्वयमुष्टि परिमितं पराध्यम्, बहु भोक्तृपुरुषाहारपर्यन्तमपराध्यं तण्डुलाद्यन्वम् ।)

अन्यानि चोपयुक्तानि वंस्तून्यासाद्य,

तत आसादितेद्वे कुशतरुणि गृहीत्वा अग्रत: प्रादेशमात्रं परिमाय तयोरुपरि आसादितानि त्रीणि कुशतरुणानि तिर्यङ्‌ निधाय पवित्रमूलेन पवित्रे प्रदक्षिणमावेष्ट्य त्रयाणां मूलाग्राणि द्वयोर्मूलं च दक्षिणहस्तेन, पवित्रे च वाम हस्तेन गृहीत्वा "पवित्रे स्थ:' इति मन्त्रेण प्रच्छिद्य द्वयोर्मूलं त्रीणि चोत्तरत: क्षिपेत् ।

देवस्य त्वेति द्वे पवित्रे प्रणीतापात्रे निधाय

ॐ देवस्य त्वा सवितु: प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृण्हाम्यग्नीषोमाभ्यां जुष्टं गृण्हामि ।।

तत: प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणहस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां त्रिरूर्ध्वं क्षिप्त्वा प्रणीतोदकेन प्रोक्ष्य आसादितानि न्युब्जानि उत्तानानि कृत्वा आज्यस्थाल्यादीनि पूर्णपात्रपर्यन्तानि प्रोक्षणीभिरद्भिरासादनक्रमेणैकैकश: प्रोक्ष्य असञ्चरे प्रणीताग्न्योरन्तराले प्रोक्षणीपात्रं निदध्यात्

ततो घृताच्यसीति आज्यस्थाल्यामासादितमाज्यं चरूंश्च प्रणीतोदकमासिच्य चरु-
स्थाल्यां निदध्यात्

ॐ घृताच्यसि जुहूर्नाम्ना सेदं प्रियेण धाम्ना प्रिय॒ सदऽ आसी-
द घृताच्यस्युपभृन्नाम्ना सेदं प्रियेण धाम्ना प्रिय॒ सदऽ आसी-
द घृताच्यसि ध्रु्वा नाम्ना सेदं प्रियेण धाम्ना प्रिय॒ सदऽआसीं-
द प्रियेण धाम्ना प्रिय॒ सदऽआसीद । ध्रुवाऽ असदन्नृतस्य
योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञ-
न्यम् ॥

ततो ब्रम्हा आज्यं चरुं च युगपदग्नावारोप्य ब्रम्हाभावे स्वयं यजमानो वा ज्वलदुल्मु-
कमादाय (धृष्टिरसीति) मन्त्रेणाऽऽज्यचर्वोः समन्ताद्भ्रामयित्वा अग्नौ क्षिपेत्

ॐ धृष्टिरस्यपाग्नेऽ अग्निमामादं जहि निष्क्रव्याद॒ सेधादेवयजं
वह । ध्रुवमसि पृथिवीन्दृ॒ह ब्रम्हवनि त्वा क्षत्रवनि सजात-
वन्युपदधामि भ्रातृव्यस्य वधाय ॥

## (छ) अथ स्रुवसंस्कारः

स्रुचश्च म इति स्रुवग्रहणम्

ॐ स्रुचश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे
ग्रावाणश्च मे धिषवणे च मे पूतभृच्च म आधवनीयश्च मे वेदि-
श्च मे बर्हिश्च मे वभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ता-
म् ॥

इति दक्षिणहस्तेन स्रुवमादाय पुनन्तु मेति, पूर्वाग्रमधोबिलमग्नौ तापयेत्

ॐ पुनन्तु मा देवजना पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥

ततो वामे पाणावुत्तानबिलं निधाय 'प्रत्युष्टꣳ रक्ष' इति दक्षिणहस्तेन संमार्जनकुशैः प्रणीतोदकेन स्रुवप्रोक्षणं कुर्यात्

ॐ प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो निष्टप्तꣳ रक्षो निनिष्टप्ताऽ अरातयः । उर्वन्तरिक्षमन्वेमि ॥

तत अनिशितोसीति दक्षिणहस्तधृतमध्यसम्मार्जनकुशानामग्रैर्मूलतोऽग्रपर्यन्तमूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तं, समृज्य १

ॐ अनिशितोसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि ॥

पुनन्तु मेति पुनः स्रुवं प्रतप्य

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥

शन्नो देवीरिति प्रणीतोदकेनाभिषिच्य

ॐ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये । शंयोरभि स्रवन्तु नः ॥

तत्त्वा यामिति पुनः स्रुवं प्रतप्य

ॐ तत्त्वा यामि ब्रम्हणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳ स मा नऽ आयुः प्रमोषीः ॥

---

१ कुशको अग्रभागले स्रुवको अग्रभाग मध्यभागले मध्यभाग र मूलभागले मूलभाग संमार्जन गर्ने क्रम पनि संस्कार भास्करमा पाइन्छ । तर यहाँ सूत्रको क्रम राखिएको छ ।

तमुत्वेति सूवमुदङमुखमात्मनो दक्षिणतो निदध्यात्

ॐ तमु त्वा दध्यङ् ऋषिः पुत्रऽ ईधेऽ अथर्वणः । वृत्रहणं पुरन्दरम् ॥

तेजोसीति आज्यमुत्थाप्य चरोः पूर्वेण नीत्वा अग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय स्थापयेत्

ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि । प्रियं देवानामनाधृष्टन्देवयजनमसि ।

तथैव चरुं चानीय पशुभिरित्यग्नेः प्रदक्षिणं कारयित्वा आज्यस्योत्तरतः स्थापयेत् [१]

ॐ पशुभिः पशूनाप्नोति पुरोडाशैर्ह्वी꣡ंष्या । छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान् ॥

आप्वस्वेत्याज्यावेक्षणम्

ॐ आपवस्व हिरन्यवदश्ववत्सोम वीरवत् । वाजं गोमन्तमा भर स्वाहा ॥

प्रत्युष्टꣳ रक्ष इति पूर्वपवित्राभ्यामाज्यं त्रिरुत्पवनम्

ॐ प्रत्युस्टꣳ रक्षः प्रत्युष्टाऽ अरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽ अरातयः । उर्वन्तरिक्षमन्वेमि ॥

आ त्वा हार्षमिति द्रव्यनिरीक्षणम्

ॐ आ त्वा हार्षमन्तरभू ध्रुवतिष्ठाविचाचलिः । विशस्त्वा सर्वा वान्छन्तु मा त्वद्राष्ट्रमधि भ्रसत् ।

विष्णो रराटमिति द्वे पवित्रे आज्ये चरौ च निधाय

---

१– चरु ल्याएर घ्यूको उत्तरतिर राख्नू ।

ॐ विष्णो रराटमसि विष्णोःश्नप्त्रे स्थो विष्णोःस्यूरसि विष्णो-
ध्रुवोसि। वैष्णवमसि विष्णवे त्वा ॥

देवस्य त्वेति प्रोक्षणीपात्रस्थपवित्राभ्यां पूर्ववत् प्रोक्षणीमुत्पूय तेनासादित वस्तुसेचनम्

ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।
अग्नीषोमाभ्याँ त्वा जुष्टं नियुनज्मि। अद्भ्यस्त्वौषधीभ्योनु
त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योनु सखा सयूथ्यः।
अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि ॥

धृष्टिरसीति ज्वलदुल्मुकमाज्यचर्वोरूपरि समन्तात् प्रदक्षिणक्रमेण भ्रामयित्वा अग्नौ
क्षिपेत्

ॐ धृष्टिरस्यपाग्नेऽअग्निमामादं जहि निष्क्रव्याद८ सेधा
देवयजं वह। ध्रुवमसि पृथिवीन्दृ८ ह ब्रम्हवनी त्वा क्षत्रवनी
सजातमन्युपदधामि भ्रातृव्यस्य वधाय ॥

## (ज) ब्रम्हाविष्णुप्रजापतीनां पूजनम्

तत्रादौअर्घं संस्थाप्य आब्रम्हन् इति ब्रम्हार्चनं कुर्यात्

ॐ आब्रह्मन् ब्राम्हणो ब्रम्हवर्चसी जायतामाराष्ट्रे राजन्यः
शूरऽ इषव्योतिव्याधी महारथो जायतां दोग्धी धेनुर्वोढानड्वा
नाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य
यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु
फलवत्यो नऽ ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

इदं विष्णुरिति विष्ण्वर्चनम्

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपा-
ꣳसुरे स्वाहा ॥

प्रजापतेनेति प्रजापतिपूजनम्

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयꣳ स्याम पतयो रयीणाम् ॥

हिरण्यगर्भ इति हिरण्यं निधाय

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

## (झ) अग्निपूजनम्

तदेवाग्निरित्यग्निमर्चयेत्

ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रम्ह ताऽआपः स प्रजापतिः ॥

ततः पूर्वस्थापितसमिधस्तिस्रो विहाय अपरसमिदाधानम्

ॐ समिधाग्निन्दुवस्यत घृतैबोधयतातिथिम् । आस्मिन्हव्या जुहोतन ।

ततः अग्नावेव पूर्वादिप्रदक्षिणक्रमेण ऋग्वेदादींश्च पूजयेत्
पर्वे

ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

ॐ ऋग्वेदाय नमः
दक्षिणे

ॐ इषे त्वोर्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणऽआप्यायध्वमघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मा मा वस्तेनऽईशत माघशꣳसो ध्रुवाऽअस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥

ॐ यजुर्वेदाय नमः
पश्चिमे

ॐ अग्नऽ आयाहि वीतये गृणानो हव्यदातये। निहोता यस्य बर्हिषि ॥

ॐ सामवेदाय नमः
उत्तरे

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः ॥

ॐ अथर्ववेदाय नमः
आप्यायस्वेति चरुं ब्रह्मणे समर्पयेत्

ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥

ततोऽग्नि प्रार्थनम्

ॐ नमो यज्ञपुरुष वैश्वानर परमात्मादेवता ब्रम्हा ऋषिः कपिलवर्ण उष्णिक् छन्दो रुद्रो देवता होमे विनियोगः ।

नारद उवाच

ॐ प्राङमुखस्तु स्थितो वन्हिः प्राङमुखा एव ऋत्विजः ।
प्राङमुखा देवताः सर्वाः कथं प्रत्यङमुखो भवेत् ॥

ब्रम्होवाच

आवाहयेत्ततो वन्हिं मन्त्रपूतेन वारिणा ।
अनलश्च जलं दृष्ट्वा भीतः प्रत्यङमुखो भवेत् ॥

नारद उवाच

पावकस्य तु किं रूपं को वर्णः किञ्च लक्षणम् ।
शिरोबाहूदराङघ्रीणां चक्षुः श्रोत्रमुखस्य च ॥

ब्रम्होवाच

पावकं द्विजरूपं च त्रिनेत्रं च चतुर्भुजम् ।
त्रिशिखं सप्तजिह्वं च पञ्चलक्षणसंयुतम् ॥
त्रिभागं तु मुखं तस्य अधिकं वक्त्रमुच्यते ।
उत्तरास्ये स्थितो विष्णुर्दक्षिणास्ये प्रजापतिः ॥
मध्यवक्त्रे तु ईशान एवं बृह्मप्रभासितम् ।
मूर्ध्नि चैव त्वहं बृह्मा मुखे चैव तु शङ्करः ॥
जिव्हायां संस्थितो विष्णुर्दंष्ट्रायां च गूहाः स्मृताः ।
नासायां देवताः सर्वाश्चक्षुषीन्दुदिवाकरौ ॥
ऋग्वेदो हृदयस्थाने बाह्वङगुल्योर्यजुस्तथा ।
उदरे कटिगुह्ये च सामवेदः प्रकीर्तितः ॥
अथर्वा जङघपादौ च ग्रीवौङ्कारस्तथैव च ।
पृष्ठे चैव तु गायत्री एवं स्यात्तु षडङ्गकम् ॥

हरकमल पिङ्गललोचन लोहिताक्षः सर्वपापप्रणाशन । इति वैश्वानरलक्षणम् । कस्य पुत्र, कस्य कुलोत्पन्नः, किं गोत्रम्, कः पिता, का माता इति कात्यायनवचनात्, शृङ्गीगोत्रम्, शाण्डिल्यः पिता, अरणिर्माता, उदानकुक्षरूर्ध्वमुखललाटम् ।

काली कराली च मनोजवा च सुलोहिता चैव सुधुम्रवर्णा ।
स्फुलिङ्गिनी विश्वधरा च चण्डी लेलायमाना इति सप्तजिह्वाः ॥

त्रिशिखं च चक्रधरं साक्षसूत्रकमण्डलुम् ।
व्याघ्रहस्तं दिव्यपुष्पगन्धाभरणभूषितम् ।
अजास्कन्धसमारूढं कृष्णाजिनोत्तरीयकम् ।
ऋग्यजुः सामाथर्वाख्यवेदानां ध्वनिभूषितम् ।
होमार्थं प्रार्थयेऽहं त्वां चर्वाज्याभ्यां हुताशन ।

(अमुककर्मणि) अमुकनामन्[1] दिव्यरूप वैश्वानर आवाहितो भव ।
तावत्तिष्ठात्र मे ब्रह्मन् यावत्कर्म समाप्यते ॥

ॐ चत्वारीति वैश्वानरमन्त्रस्य वामदेवऋषिस्त्रिष्टुप्छन्दो वैश्वानरो देवता अग्निप्रार्थने विनियोगः ।

**ॐ चत्वारी शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्तहस्तासोऽअस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां २॥ आविवेश ।**

इति अग्निप्रार्थनम्

ततो गन्धपुष्पादिभिरग्निं पूजयेत–आग्नेये – ॐ ब्रह्मणे नमः ।
नैऋत्ये – ॐ पौष्टिकाय नमः । वायव्ये – ॐ बलवर्धनाय नमः ।
ऐशान्ये – ॐ प्रजापतये नमः । मध्ये – ॐ विष्णवे नमः ।

---

१– कर्मविशेषे अग्नेर्नामानि–

वायवीयसंहितायाम्

लौकिके पावको ह्यग्निः प्रथमः परिकीर्तितः । अग्निश्च भरतो नाम गर्भाधाने विधीयते ॥
तथा पुंसवने चैव शुभे कर्मणि शोभनः । सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि ॥

नाम्नि वै पार्थिवो वह्निः प्राशने तु शुचिः स्मृतः। सभ्यनामाथ चूडायां व्रतदाने समुद्भवः॥
वेदारम्भे हरिर्नाम राजपुत्रः समावृते। गोदाने सूर्यनामा च केशान्ते ह्यग्निरुच्यते॥
वैस्वानरो विसर्गे तु विवाहे योजकस्तथा। चतुर्थीकर्मणि शिखी धृतिरग्निस्तथापरे(१)॥
लक्षहोमे वह्निनाम कोटिहोमे हुताशनः। प्रायश्चित्ते विधिर्नाम पाकयज्ञे तु साहसः॥
पूर्णाहुत्यां मृडो नाम शान्तिके दारुणस्तथा। पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारिके।
वश्यर्थे कामदो नाम वनदाहे तु वर्धनः। आवसथ्ये भवेदग्निर्होमे तु सम्प्रदायकः॥
क्रव्यादो मृतभक्षी च समुद्रे वडवानलः। युगान्ते संक्षयो नाम संवर्तःप्रलये स्मृतः।इति।

तथा ग्रन्थान्तरे

अग्निश्च भरतो नाम गर्वाधाने विधीयते। तथा पुंसवने चैव सीमन्ते जातकर्मणि॥
नाम्नि वै पार्थिवो वन्हिः प्राशने तु शुचिः स्मृतः। चूडायां मङ्गलो नाम व्रतदाने समुद्भवः॥
गोदाने सूर्यनामा च विवाहे योजकस्तथा। शान्ति के दारुणो नाम पौष्टिके बलवर्धनः॥
आवसभ्ये भवेदग्निरग्निष्टोमे प्रदायकः। वनदाहे दूतकाख्यः प्रकोष्ठे जठरः स्मृतः॥
वायव्ये वरुणो नाम स्थावरे पावको भवेत्। क्रव्यादो मृतभक्षी च समुद्र वडवानलः॥
युगान्ते चाक्षयो नाम वत्सरे प्रलयं गतः। इति।

वाचस्पतौ

लौकिके पावको ह्यग्निः प्रथमः परिकीर्तितः। अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्तितः॥
पुंसवे चमसो नाम शोभनः शुभकर्मसु। सीमन्ते ह्यनलो नाम प्रगल्भो जातकर्मणि॥
पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचिः। सभ्यनामा तु चूडायां व्रतादेशे समुद्भवः॥
गोदाने सूर्यनामा स्यात् केशान्ते याज्ञिकः स्मृतः। वैश्वानरो विसर्गे स्यात् विवाहे बलदः स्मृतः॥
चतुर्थीकर्मणि शिखी धृतिरग्निस्तथापरे। आवसथ्यस्तथाधाने वैश्वदेवे तु पावकः॥
ब्रह्माग्निर्गार्हपत्ये स्याद् दक्षिणाग्निरथेश्वरः। विष्णुराहवनीये स्यादग्निहोत्रे त्रयो मताः॥
लक्षहोमेऽभीष्टदः स्यात्कोटिहोमे महाशनः। एके घृर्हाचिषं प्राहुरग्निध्यानपरायणाः॥
रुद्रादौ तु मृडो नाम शान्तिके शुभकृत्तथा। (आदिशब्दाल्लघुरुद्रशतरुद्रातिरुद्रा लक्ष्यन्ते)
पौष्टिके वरदश्चैव क्रोधाग्निश्चाभिचारिके। वश्यार्थे वशकृत्प्रोक्तो वनदाहे तु पोषकः॥
उदरे जठरो नाम क्रव्यादः शवभक्षके। समुद्रे वाडवो हृयग्निर्लये संवर्तकस्तथा॥
सप्तविंशतिसंख्याता अग्नयः कर्म सुस्मृताः। इति।

---

१. 'चतुर्थ्यां तु शिखीनाम घृतिरग्निस्तु सामनी"
यस्तो पाठ पनि छ।

# (ञ) अथ ब्राम्हणवरणम्

तत्रादौ कुशतिलजलयुतगन्धपुष्पाक्षतताम्बूलपूगीफलवस्त्रद्रव्याभरणादीन्यादाय

हरि ॐ तत्सत् विष्णु: ३ इत्यादिदेशकालादीन् सङ्कीर्त्य (अमुक) गोत्रः (अमुक) प्रवरः (अमुक) शर्माहं मम (अमुक) कर्मणि कृताकृतावेक्षणादिरूपब्रह्म-कर्मकर्तुं तथा च (अमुक) कर्मणि प्रतिदेवतानां मुखे साज्यभागान्तमाहवनीयद्रव्य-युतहोमकर्मकर्तुं तथा च (अमुक) कर्मणि तत्तत्कर्मविहितोपयोग्याचारकर्मकर्तुं तथा च (अमुक) कर्मणि चतुर्वेदोक्तमन्त्रजपपाठकर्मकर्तुं नानानामगोत्रान् नानानामश-र्मणो ब्राम्हणानेभिश्चन्दनपुष्पाक्षतताम्बूलपूगीफलवासोद्रव्याभरणादिभिर्गणपति-ब्रम्हाहोत्राचार्यत्वेन जापकपाठकत्वेन ऋत्विक्त्वेन च युष्मानहं वृणे । ॐ वृताः स्म इति ब्रम्हणाः ब्रूयुः ।

अथ ब्रह्मादि ऋत्विक प्रार्थना ।

ब्रह्मप्रार्थना

ॐ यथा चतुर्मुखो ब्रम्हा सर्ववेदविशारदः ।
तथा त्वं मम यज्ञेऽस्मिन् ब्रम्हा भव द्विजोत्तम ॥

होतृप्रार्थना

ॐ भगवन् सर्वधर्मज्ञ सर्वधर्मविदांवर ।
वितते मम यज्ञेऽस्मिन् होतृत्वं मे मखे कुरू ॥

आचार्यप्रार्थना

ॐ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥

वेदपाठकानां प्रार्थना

पूर्वदिशि ऋग्वेदपारायणार्थम्

ॐ ऋग्वेदः पद्म पत्राक्षः गायत्रः सोमदैवतः ।
अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥

दक्षिणदिशि यजुर्वेदपारायणार्थम्

ॐ कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः

काश्यपेयस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ।।

पश्चिमदिशि सामवेदपारायणार्थम्

ॐ सामवेदस्तु पिङ्गाक्षो जागतः शक्रदैवतः ।

भारद्वाजस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ।।

उत्तरदिशि अथर्ववेदपारायणार्थम्

ॐ बृहन्नेत्रोऽ थर्ववेदोऽ नुष्टुभो रुद्रदैवतः ।

वैशंपायन विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ।।

( अमुक ) कर्मणि (अमुक) देवताया अमुकमन्त्रजपकर्मकर्तुं त्वामहं वृणे

इति जापकांश्च वृणुयात् ।

ततो ब्राम्हणान् मधुपर्कादिना संपूज्य प्रार्थयेत्

ॐ ब्राम्हणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः ।

वेदानां चैव दातारः पातारः सर्वदेहिनाम् ।।

जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः ।

देवानां च पितृणां च तृप्त्यर्थं पाठकाः कृताः ।।

येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम् ।

रक्षन्तु सततं तेऽ स्मान् जपयज्ञे व्यवस्थिताः ।।

ब्राम्हणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ।

येषां वाक्यामृतेनैव शुद्धयन्ति मलिनो जनाः

पावनाः सर्ववर्णानां ब्राम्हणा ब्रम्हरूपिणः ।

सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ।।

श्रोत्रियाः सत्यवाचश्च वेदध्यानरताः सदा ।

यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥
अङ्गीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः
यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ॥
यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ।
मम यज्ञे सदा पूज्याः सन्तु वै नियमान्विताः ।
अक्रोधनाः शौचपराः सततं ब्रम्हवादिनः ।
जपध्यानरता नित्यं प्रसन्नमनसः सदा ॥
अदुष्टभाषिणः सन्तु मा सन्तु परनिन्दकाः ।
ममापि नियमा ह्येते भवन्तु भवतामपि ॥

इति ब्राम्हणप्रार्थनायां विशेषवाक्यानि ।

# (ट) अथ पुण्याहवाचनम्

गन्धपुष्पाक्षतताम्बूलपूगीफलद्रव्यवस्त्रादिभिस्त्रींश्चतुरः पञ्च वा ब्राम्हणान् सम्पूज्य हस्ते फलादिकं गृहीत्वा

ॐ तत्सत् विष्णुरित्यादि देशकालौ स्मृत्वा अद्येहामुकगोत्रस्यामुकशर्मणो मम गृहेऽमुककर्मणि भो ब्राम्हणाः ॐपुण्याहं भवन्तो ब्रुवन्तु इति त्रिः। श्रावयेत् । ते च ॐ पुण्याहम् । इति त्रिः प्रतिवचनं ब्रूयुः ।

**ॐ पुनन्तु मा देवजनाः, पुनन्तु मनसा धियः पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥**

(यजुः– १९।३९)

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य– भो ब्रह्मणाः ॐ स्वस्ति भवन्तो ब्रुवन्तु इति त्रिः श्रावयेत् । ॐ स्वस्तिः । इति त्रिः प्रतिवचनम् ।

ॐ स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वति न : पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्योऽ अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

(यजु:– २५।१९)

पुनः पूर्ववत् ॐ अद्येहेत्यादि उच्चार्य भो ब्रह्मणाः ॐ ऋद्धि भवन्तो ब्रुवन्तु इति त्रिः ॐ ऋद्धिः इति त्रिः प्रतिवचनम् ।

ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृताऽअभूम ।
दिवं पृथिव्याऽअध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥

(यजू:– ८।५२)

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य-भो ब्रह्मणाः ॐ वृद्धि भवन्तो ब्रुवन्तु इति त्रिः । ॐ वृद्धिः । इति त्रिः प्रतिवचनम् ।

ॐ ज्यैष्ठचञ्च मऽआधिपत्यञ्च मे मन्युश्च मे भामश्च मेमश्च मेम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धञ्च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ॥

(यजु:-- १८।४)

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य भो ब्राह्मणाः ॐ कल्याणं भवन्तो ब्रुवन्तु । इति त्रिः । ॐ कल्याणम् । इति त्रिः प्रतिवचनम् ।

ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रम्हराजन्याभ्या९ँ शूद्राय चार्याय च स्वाच चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्धिचतामुपमादो नमतु ॥

(यजु:- २६।२)

पुनः पूर्ववत् अद्येहत्याद्युच्चार्य भो ब्राह्मणाः शान्ति भवन्तो ब्रुवन्तु । इति त्रिः
ॐ शान्तिः । इति त्रिः प्रतिवचनम् ।

ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥

(यजुः ३६।१७

पुनः पूर्ववत् अद्येहेत्याद्युच्चार्य भो ब्रह्मणाः श्रियं भवन्तो ब्रुवन्तु । इति त्रिः । श्रीः । इति त्रिः प्रतिवचनम् ।

ॐ मनसः काममाकूतिं वाचः सत्यमशीय ।
पशूना ꣳ रूपमन्नस्य रसो यशः श्रीः श्रयताम् ॥

यजुः ३९।४

इति पुण्याहवाचनम् ।

## (ठ) अथ दीपपूजा

तत्र स्थिरो भवेति दीपं प्रज्वालयेत्

ॐ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् ।
पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः ॥

पृष्टो दिवीति पूजनम्

ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽओषधीराविवेश ॥

वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम् ॥

इति पाद्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्

ॐ शुभं भवतु कल्याणमारोग्यं सुखसम्पदः ॥
सर्वशत्रुविनाशाय दीपज्योतिर्नमोऽस्तु ते । इति

## (ड) अथ कलशपूजा

तत्र वेद्या ईशानदिग्भागे अव्रणं दध्यक्षतादिभूषितं कलशं धान्योपरि स्थापयित्वा पूजयेत् । तत्प्रकारश्च यथा

भूरसीति भूमिशोधनम्

ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ।

धान्यमसीति धान्यं स्थापयेत्

ॐ धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा । दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोसि ॥

आ जिघ्रकलशमिति धान्योपरि अव्रणं कलशं स्थापयेत्

आ जिघ् कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥

वरुणस्योत्तम्भनमसीति कलशे तीर्थादिजलं प्रक्षिपेत्

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽ ऋतसदनमासीद ॥

या ओषधीरिति सर्वौषधीः प्रक्षिपेत्

ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनु बभ्रूणामह्ꣳ शतं धामानि सप्त च ॥

हिरण्यगर्भ इति पञ्चरत्नानि

ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । स दाधार पृथिवीं द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥

या फलिनीरिति फलादीनि

ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः । वृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳ हसः ॥

ओषधय इति यवान्

ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राम्हणस्तꣳ राजन्पारयामसि ॥

गन्धद्वारामिति चन्दनम्

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपव्हये श्रियम् ।।

काण्डात्काण्डादिति दूर्वा

ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ।।

स्योना पृथिवीति सप्तमृत्तिकाः

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथाः ।।

अश्वत्थेव इति पञ्चपल्लवैस्तन्मुखमाच्छाद्य

ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ।।

बृहस्पतेऽअतीति वस्त्रयुग्मेन कलशं वेष्टयेत्

ॐ बृहस्पतेऽअति यदर्योऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु ।
यद्दिदयच्छवसऽऋत प्रजात तदस्मासु द्रविणं धेहिचित्रम् ।।
उपयामगृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पते त्वा ।।

अम्बेऽअम्बिके इति आम्रपल्लवैस्तन्मुखमाच्छाद्य

ॐ अम्बेऽअम्बिके म्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ।।

तत्त्वा यामीति कलशे वरुणमावाह्य पूजयेत्

ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तादाशास्ते यजमानो हविर्भिः।
अहेडमानो वरुणेह बोध्युरूशꣳ स मा नऽ आयुः प्रमोषीः ।।

ततः कलशे गङ्गादितीर्थान्यावाहयेत्

ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥

कलशं स्पृष्ट्वाभिमन्त्रयेत्

ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।

ततः कलशप्रार्थना

ॐ देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पनोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवाः सपितृकाः ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ।

इति ।

## (ढ) अथ गणेशपूजा

हस्ते कुशयवजलान्यादाय– ॐ अद्येहेत्यादि (अमुक) कर्म निर्विघ्नपरिसमाप्त्यर्थममुकर्माङ्गतया गणेशपूजमहं करिष्ये । इति सङ्कल्प्य,
"गणानान्त्वा" "हे हेरम्ब" इत्यादिमन्त्रैरावाहयेत् ।

**ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳहवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥**

ॐ हे हेरम्ब त्वमेह्येहि अम्बिकात्र्यम्बकात्मज ।
सिद्धि बुद्धिपते त्र्यक्ष लक्ष्यलाभयितः पितः ॥
नागस्य नागहार त्वं गणराज चतुर्भुज ।
भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुशपरस्वधैः ॥
आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ।
इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष माम् ॥

इत्यावाह्य

ॐ भूर्भुवः स्वः गणपतये सिद्धिबुद्धिसहिताय सायुधाय सवाहनाय सपरिवाराय इदमासनं समर्पयामि ।

ततः सहस्रशीर्षेत्यादिषोडशमन्त्रैः षोडशोपचारैः पूजयेत् ।

तद्यथा–

आसनम्, पाद्यम्, अर्घ्यं, आचमनीयम्, यज्ञोपवीतम्, वस्त्रम्, चन्दनम्, दूर्वा, अक्षताः, धूपः, दीपः, नैवेद्यम्, आचमनीयम्, ताम्बूलम्, वस्त्रालङ्कारादियल्लब्धम्, दक्षिणाद्रव्यम्, पादवन्दनम् । एभिः सम्पूज्य नारिकेलादिफलं सवस्त्रं पुरतः पात्रे निधाय स्तुतिं कुर्यात्

ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ।
भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥
द्वैमातुर कृपासिन्धो षाण्मातुर जगत्प्रभो ।
वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥

अनेन फलदानेन फलदोऽस्तु सदा मम ।
वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।।

## (ण) अथ रक्षाबन्धनपूजा

यवदूर्वासर्षपचन्दनगोमयदधिसहितां रक्षां ताम्रपात्रे निधाय पात्रं स्पृशन् नारायण कवचं पठेत्

ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः ।
याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ।।
वारुण्यां केशवो रक्षेद्वायव्यां मधुसूदनः ।
उत्तरे श्रीधरो रक्षेदधस्तात्तु महीधरः ।।
एवं दशदिशो रक्षेद्वासुदेवो जनार्दनः ।
यज्ञाग्रे रक्षताच्छङ्खः पृष्ठे वै पद्ममुत्तमम् ।।
वामपार्श्वे गदा रक्षेद्दक्षिणे तु सुदर्शनः ।
उपेन्द्रः पातु ब्रम्हाणमाचार्यं पातु वामनः ।।
ऋग्वेदमच्युतो रक्षेद्यजुर्वेदमधोक्षजः ।
कृष्णो रक्षतु सामानमथर्वाणञ्च माधवः ।।
उपविष्टाँश्च विप्राँस्ताननिरुद्धोऽभिरक्षतु ।
यजमानं सपत्नीकं पुण्डरीकाक्ष एव तु ।।
रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षताद्धरिः ।
वेदमन्त्रैश्च कर्तव्या रक्षा शुभ्रैस्तु सर्षपैः ।।
कृत्वा पोटलिकां पूर्वं बध्नायाद्दक्षिणे करे ।
इति ।

ततो वक्षमाणमन्त्रैः पूजयेत्

ॐ रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखानेदमहन्तं वलगमुत्किरामि यं मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥

ॐ स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्य मित्रहा ॥

ॐ रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो वलगहनोवनयामि वैष्णवान्रक्षोहणो वो वलगहनोवस्तृणामि वैष्णवान्रक्षोहणौ वां वलगहनाऽउपदधामि वैष्णवी रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवास्थ ॥

ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतोलोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ।

इति रक्षाबन्धनपूजा ।

ततः कलशस्कन्धप्रदेशे

ॐ गणपतिसूर्यदेवीशिवविष्णून्, विनायकदुर्गावाय्वाकाशाश्विनिकुमारान्, सूर्यसोमभौमबुधबृहस्पतिशुक्रशनिराहुकेतून्, ईश्वरोमास्कन्दहरिब्रह्मेन्द्रयमकालचित्रगुप्तान्, अग्नि अप् भूमिविष्णु इन्द्र इन्द्राणी प्रजापतिसर्पब्रह्मणः इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तान्, ध्रुवाद्यष्टवसून्, धात्रादिद्वादशादित्यान्, वीरभद्राद्येकादशरु-

द्रान्, गौर्यादिषोडशमातृः, आवहादिसप्तमरुतः, विनायकब्रह्मविष्णुरुद्रार्कवनस्पतीना-वाह्य यथामिलितोपचारैः (पञ्चोपचारैः षोडशोपचारैर्वा) पूजयेत् ।

## (त) अथ होमसङ्कल्पः

कुशादिकमादाय

ॐतत्सत् विष्णुः ३ इत्यादिदेशकालादीन् सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) प्रवरस्य (अमुक) शर्मणो मम (अमुक) कर्मणि आघाराज्यभागपञ्चवारुणिहोम-पूर्वकप्रधानभूतेभ्यो देवेभ्यो गणपत्यादिपाञ्चायनेभ्यो विनायकादिपञ्चलोकपालेभ्यः सूर्यादिनवग्रहेभ्य ईश्वराद्यधिदेवेभ्योऽग्न्यादिप्रत्यधिदेवेभ्य इन्द्रादिदशदिक्पालेभ्यो ध्रुवाद्यष्टवसुभ्यो धात्रादिद्वादशादित्येभ्यो वीरभद्राद्येकादशरुद्रेभ्यो गौर्यादिषोडशमा-तृभ्य आवहादिसप्तमरुद्भ्यो विनायकब्रह्मविष्णुरुद्रार्कवनस्पतिभ्यः (प्रधानदेवेभ्यः) तथा चतुः स्वस्तिभ्यः पयः पञ्चभ्यः षड्विष्णुभ्यो द्वादशदेवताभ्यो द्वादश-शान्तिभ्यः षट्प्रातर्भ्यः षड्वातेभ्य स्त्र्यनडुद्भ्यः पञ्चभगेभ्यः पञ्चेन्द्रियेभ्यः पञ्च-वरुणभ्यो गायत्र्यै सावित्र्यै सरस्वत्यै गृहमात्रेऽन्नपूर्णायै महालक्ष्म्यै महारिष्टविनाशि-न्यै चण्डयै द्यौराल्यै वास्तुदेवाय भूमिदेवाय गैडुदेवाय क्षेत्रपालाय ग्रामदेवाय स्वर्गेन्द्रा-य पातालवासुकिभ्यो मित्रलोकपालाय मान्धात्रे तीर्थराजाय वृतराजाय पुनर्दिक्पा-लेभ्यस्तिथिभ्यो नक्षत्रेभ्यो वारेभ्यः करणभ्यो वातेभ्यो मेघेभ्यः समुद्रेभ्यो नदीभ्य इष्टदेवेभ्यः कुलदेवेभ्यः स्थापितदेवेभ्यो भैरवाय भैरव्यै विन्ध्यवासिन्यै स्थानविशे-षाधिपति देवताभ्यः सर्वदेवेभ्यः सर्वहोमपूरणार्थेभ्यः पञ्चपाण्डवेभ्यो भीमसेनाय पितृभ्यो वैश्वानराय उत्तराङ्ग भूर्भुवः स्वः अग्निवरुणसवितृविष्णु विश्वेदेव मरुत्स्वर्क प्रजापतिः स्विष्टकृद्देवेभ्य इदमाज्यादिद्रव्यहोमं यथासंख्येन ब्राह्मणद्वारा अहं करिष्ये । इति होमसङ्कल्पः ।

तत उपयमनकुशान् वामहस्ते कृत्वोत्तिष्ठन् प्रजापतिं मनसा ध्यायन् समिद्धतमेऽग्नौ समिधाग्निमिति मन्त्रेण पूर्वस्थापितास्तिस्रः समिधः प्रक्षिप्योपविश्य,

**ॐ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।**
**आस्मिन्हव्या जुहोतन ।।**

पृष्टो दिवीति मन्त्रेण दक्षिण चुलुकेन सपवित्रप्रोक्षण्युदकमादाय,

**ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽ ओषधीराविवेश । वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम् ॥**

सुसमिद्धायेतिमन्त्रेण तज्जलेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य

**ॐ सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन। अग्नये जातवेदसे ॥**

पातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतिर्जुहोति तत्राघारादारभ्य द्वादशाहुतिषु तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ।

# (थ) अथ प्रजापत्यादिवनस्पत्यन्तहोमः[१]

ॐ प्रजापतय इति प्रजापतिऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः।

ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । (इति मनसा) प्रोक्षणीपात्रेऽपि ।

ॐ इन्द्रायेति प्रजापति ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता आज्यहोमे विनियोगः ।

ॐ इन्द्राय स्वाहा । इदमिन्द्राय न मम । (इति आघारौ) प्रोक्षणीपात्रेऽपि ।

ॐ अग्नय इति प्रजापतिऋषिस्त्रिष्टुप्छन्दो ऽग्निर्देवता आज्यहोमे विनियोगः ।

---

(१) होमे श्रुवधारणप्रकारः

अग्रेधृतोऽर्थनाशः स्यात् मध्ये चैव मृतप्रजा। मूले च म्रियते होता स्रुवस्तु कुत्र धार्यते ॥
अग्रमध्याच्च यन्मध्यं मूलमध्याच्च मध्यतः। स्रुवं धारयते विद्वान् ज्ञातव्यं च सदा बुधैः ॥
तर्जनीं च बहिः कृत्वा कनिष्ठां च बहिस्ततः। मध्यमानामिकाङ्गुष्ठैः स्रुवं धारयते द्विजः ॥

आहुतिप्रदानस्थल विचारः–

अस्यान्तर्जुहुयाद् वह्नेः पण्डितः सर्वकर्मसु । बधिरत्वं कर्णहोमे नेत्रे त्वन्धत्वमाप्नुयात।
नासिकायां मनः पीडा शिरो होमे तु मृत्युदः ।

अङ्गज्ञानश्चाह–

यत्र काष्ठं तत्र श्रोत्रं यत्र धूमोऽथ नासिका। यत्राल्पज्वलनं नेत्रं यतो भस्म ततः शिरः ॥
यत्र प्रज्वलितो वह्निस्तन्मुखं जातवेदसः। घृतधारास्ततो दद्याव्यावत् स्विन्नो भवेच्चरुः॥

अन्यत्र च–

"अदीप्तेऽग्नौ हुतो होमः" इति ।

ॐ अग्नये स्वाहा । इदमग्नये न मम । प्रोक्षणीपात्रेऽपि ।

ॐ सोमायेति प्रजापतिऋषिस्त्रिष्टुप्छन्दः सोमो देवता आज्यहोमे विनियोगः ।

ॐ सोमाय स्वाहा । इदं सोमाय न मम । (इति आज्यभागौ) प्रोक्षणीपात्रेऽपि ।

ॐ भूर्भुवः स्वरिति महाव्याहृतीनां प्रजापतिऋषिरग्निवायुसूर्यो देवता गायत्र्युष्णि-गनुष्टुभश्छदांसि अग्न्याधाने विनियोगः ।

ॐ भूः स्वाहा । इदमग्नये न मम । प्रोक्षणीपात्रेऽपि ।

ॐ भुवः स्वाहा । इदं वायवे न मम । प्रोक्षणीपात्रेऽपि ।

ॐ स्वः स्वाहा । इदं सूर्याय न मम । प्रोक्षणीपात्रेऽपि । एता महाव्याहृतयः ।

## पञ्चवारुणिहोमः

ॐ त्वन्नोऽअग्न इति वामदेवऋषिरग्नीवरुणौ देवते त्रिष्टुप्छन्दः प्रायश्चित्तहोमे विनियोगः ।

**ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो वन्हितमः शोशुचानो विश्वा द्वेषा ꣳ सि प्रमुमुग्ध्य-स्मत्स्वाहा ।**

इदमग्नीवरुणाभ्यां न मम । प्रोक्षणीपात्रेऽपि ।

ॐ स त्वन्न इति वामदेवऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते आज्यहोमे विनियोगः ।

**ॐ स त्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो नऽ एधि स्वाहा ॥**

इदमग्नीवरुणाभ्यां न मम । प्रोक्षणीपात्रेऽपि ।

ॐ अयाश्चाग्न इति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता प्रायश्चित्तहोमे विनियोगः ।

ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि ।
अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा ॥

इदमग्नये न मम । प्रोक्षणीपात्रेऽपि ।

ॐ ये ते शतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्का देवता प्रायश्चित्तहोमे विनियोगः ।

ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।
ते भिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम ।
प्रोक्षणीपात्रेऽपि ।

ॐ उदुत्तममिति शुनः शेपऋषिस्त्रिष्टुप्छन्दो वरुणो देवता पाशान्मोचने विनियोगः ।

ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय ।
अथा वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥

इदं वरुणाय न मम । प्रोक्षणीपात्रेऽपि । एताः प्रायश्चित्तसंज्ञकाः ।
इति पञ्चवारुणिहोमः ।

# अथ प्रधानदेवताहोमः[1]

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳहवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम् स्वाहा ॥
इदं गणपतये न मम।

ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्येन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा ॥
इदं सूर्याय न मम।

---

१– अथ प्रधानदेवताहोमसूत्राणि
गणेशो भास्करो देवी शिवो विष्णुश्च पञ्चमः। पञ्चायतननामानि कथिताः पञ्चदेवताः॥१॥
विनायकस्तथा दुर्गा वायुराकाश एव च। नासत्यदस्रौ पञ्चैते लोकपालाः प्रकीर्तिताः ॥२॥
सूर्यः सोमश्च भौमश्च बुधो जीवश्च भार्गवः। शनी राहुश्च केतुश्च कथिताश्च नवग्रहाः ॥३॥
ईश्वरश्च उमा स्कन्दो विष्णुर्ब्रह्मा शचीपतिः। यमः कालश्चित्रगुप्त इत्येता अधिदेवताः ॥४॥
अग्निरापो धरा विष्णुरिन्द्र ऐन्द्री प्रजापतिः। सर्पा ब्रह्मा क्रमात्प्रोक्ता नव प्रत्यधिदेवताः ॥५॥
इन्द्राग्नी यमनिर्ऋती वरुणो मरुतो विधुः। ईशो ब्रम्हा तथानन्तो दिक्पालाः परिकीर्तिताः ॥६॥
ध्रुवाद्यष्टवसुर्ज्ञेयो धात्रादित्यास्तु द्वादश। वीर भद्राद्येकादश गौर्यादिमातृषोडश ॥७॥
आवाहादिमरुत्सप्त विनायकविधी हरिः। रुद्राश्चार्कस्तथा प्रोक्तो वनस्पतिः क्रमेण हि ॥८॥
चतुः स्वस्तिःपयः पञ्च षड्विष्णुर्देव द्वादश। शान्तिर्द्वादश षट्प्रातः षड्वातास्तु क्रमेण हि॥९॥
अनडुत्संज्ञको ज्ञेयो होमकर्मणि वै ध्रुवम्। पञ्चभगेन्द्रियाः पञ्च वरुणाः पञ्च एव च॥१०॥
गायत्री चैव सावित्री वाग्देवी गृहमातृकाः। अन्नपूर्णा महालक्ष्मी महारिष्टविनाशिनी ॥११॥
चण्डी च्यौराली विज्ञेया वास्तुभूम्यस्तथैव च। गैडुश्च क्षेत्रपालश्च ग्रामदेवास्ततः परम् ॥१२॥
स्वर्गेन्द्रो वासुकिश्चैव मित्रलोकस्तथैव च। मान्धाता तीर्थराजश्च व्रतराजस्ततः परम् ॥१३॥
पुनर्दिक्पालका ज्ञेयास्तिथिनक्षत्रयोगकाः। वारश्च करणश्चैव वायुमेघसमुद्रकाः ॥१४॥
नदीष्टकुलदेवाश्च स्थापिता देवताः क्रमात्। भैरवो भैरवी विन्ध्यवासिनी स्थानदेवताः॥१५॥
एषोह् सर्वदेवाश्च शुक्रज्योतिस्तथैव च। पाण्डवाः पितरश्चव वैश्वानरः क्रमेण च ॥१६॥
पूर्णपात्रं ततो दद्याद्बहिर्होमस्ततः परम्। गोभूरत्नहिरण्यादि रौप्यवस्त्राणि चैव हि ॥१७॥
देयानि द्विजमुख्येभ्यो यजमानो विशेषतः। इति होमसूत्राणि।

चरुहोमे मुद्रा विचार–
तिस्रोमुद्रास्तु सम्प्रोक्ता मृगी हंसी च सूकरी। सूकरी करसङ्कोचाद् हंसी मुक्तकनिष्ठिका॥
कनिष्ठातर्जनीहीना मृगीमुद्रा तिलाहुतौ। शान्तिकर्मणि सर्वत्र मृगी हंसी शुभे उभे॥
अभिचारेषु सर्वेषु सूकरी तु प्रकीर्तिता।

ॐ देवीर्द्वारऽइन्द्रꣳ सङ्घाते वीड्वीर्यामन्नवर्धयन् । आवत्सेन तरुणेन कुमारेण च मीवता पार्वाणꣳ रेणुककाटं नुदन्तां वसुवने वसुधेयस्य व्यन्तु यज स्वाहा ।

इदं देव्यै न मम ।

ॐ नमः शम्भवाय च मयो भवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च स्वाहा ।

इदं शिवाय न मम । अत्र प्रणीतोदकस्पर्शः ।

ॐ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा स्वाहा ।

इदं विष्णवे न मम । इति पाञ्चायनाः ।

## अथ पञ्चलोकपालाः

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳहवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् स्वाहा ।

इदं विनायकाय न मम ।

ॐ अम्बे ऽ अम्बिकेम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा ॥

इदं दुर्गायै न मम ।

ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये स्वाहा ।

इदं वायवे न मम ।

ॐ ऊधर्वाऽअस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳ
ष्यग्नेः । द्युमत्तमा सुप्रतीकस्य सूनोः स्वाहा ।

इदमाकाशाय न मम ।

ॐ अश्विनोर्भैषज्येन तेजसे ब्रम्हवर्चसायाभिषिञ्चामि
सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण
बलाय श्रियै यशसेभिषिञ्चामि स्वाहा । ।

इदमश्विनीकुमाराभ्यां न मम । इति पञ्चलोकपालाः ।

## अथ नवग्रहाः

ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा ॥

इदं सूर्याय न मम ।

ॐ इमन्देवाऽअसपत्नꣳ सुवध्वं महते क्षत्राय महते ज्यै-
ष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इदममुष्य पुत्रममुष्यै
पुत्रमस्यै विशऽएष वोमी राजा सोमोस्माकं ब्राम्हणानाꣳराजा
स्वाहा ॥

इदं सोमाय न मम ।

ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाꣳ
रेताꣳसि जिन्वति स्वाहा ॥

इदं भौमाय न मम ॥

ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳ सृजेथाम-यञ्च अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत स्वाहा ॥

इदं बुधाय न मम ॥

ॐ वृहस्पतेऽ अति यदर्योऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् । उपयामगृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पतये त्वा स्वाहा ॥

इदं बृहस्पतये न मम ॥

ॐ अन्नात्परिस्रुतो रसं ब्रम्हणा व्यपिवत्क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदं पयोमृतं मधु स्वाहा ॥

इदं शुक्राय न मम ॥

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः स्वाहा ॥

इदं शनैश्चराय न मम ॥

ॐ कया नश्चित्रऽआभुवदूती सदावृधः सखा । कया शचिष्ठया वृता स्वाहा ॥

इदं राहवे न मम ॥

ॐ केतुङ्कृण्वन्नकेतवे पेशो मर्याऽअपेशसे । समुषद्भि
रजायथाः स्वाहा ।

इदं केतवे न मम ॥

इति नवग्रहाः ॥

## अथाधिदेवता

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारूकमिव
बन्धनान्मृत्योर्मुक्षीय मामृतात् स्वाहा ॥

इदमीश्वराय न मम । अत्र प्रणीतोदकस्पर्शः१ ।

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि
रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽ
इषाण स्वाहा ॥

इदमुमायै न मम ॥

ॐ यदक्रन्दः प्रथमं जायमानऽउद्यन्त्समुद्रादुतवा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहूऽउपस्तुत्यं महि जातं तेऽअर्वन्
स्वाहा ॥

इदं स्कन्दाय न मम ।

ॐ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि
विष्णो र्ध्रुवोसि वैष्णवमसि विष्णवे त्वा स्वाहा ॥

इदं विष्णवे न मम ॥

---

१– रौद्रमासुरमाभिचारणिकं च मन्त्रमुक्त्वा पित्र्यम्, आत्मानंच आलभ्य उपस्पृशेदपः" इति का० श्रौ० सू० वचनात् ।

ॐ ब्रम्ह जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरूचो वेनऽ आवः । स बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा ॥

इद्रं ब्रह्मणे न मम ॥

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳशूरमिन्द्रम्। व्हयामि शक्रं पुरुहूतमिन्द्रꣳस्वस्ति नो मघवा धात्विन्द्रः स्वाहा॥

इदमिन्द्राय न मम ।

ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे । देवस्त्वा सविता मध्वा नक्तु पृथिव्याः सꣳ स्पृशस्पाहि । अर्चिरसि शोचिरसि तपोसि स्वाहा ॥

इदं यमाय न मम । अत्र प्रणीतोदकस्पर्शः ।

ॐ कार्षिरसि समुद्रस्य त्वा क्षित्याऽउन्नयामि । समापोऽ अद्भिरग्मत समोषधीभिरोषधीः स्वाहा ॥

इदं कालाय न मम । अत्र प्रणीतोदकस्पर्शः ।

ॐ इन्धानास्त्वा शतꣳ हिमा द्युमन्तꣳ समिधीमहि । वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भ-नमदब्धासोऽ अदाभ्यम् । चित्रावसो स्वस्ति ते पारमशीय स्वाहा ॥

इदं चित्रगुप्ता न मम । अत्र प्रणीतोदकस्पर्शः । इत्यधिदेवताः ।

# अथ प्रत्यधिदेवताः

ॐ अग्निन्दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ२ऽ आसादयादिह स्वाहा ॥

इदमग्नये न मम ॥

ॐ अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनः स्वाहा ॥

इदमद्भ्यो न मम ।

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्मसप्रथाः स्वाहा ॥

इदं भूम्यै न मम ।

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाँ॒सुरे स्वाहा ॥

इदं विष्णवे न मम ।

ॐ इन्द्रऽआसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर ऽ एतु सोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनां मरुतो यन्त्वग्रम् स्वाहा ॥

इदमिन्द्राय न मम ।

ॐ अदित्यै रास्नासीन्द्राण्याऽउष्णीषः । पूषासि घर्माय दीष्व स्वाहा ॥

इदमिन्द्राण्यै न मम ।

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयꣳस्याम पतयो रयीणाम् स्वाहा॥

इदं प्रजापतये न मम।

ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवी मनु। येऽ अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा॥

इदं सर्पेभ्यो न मम।

ॐ ब्रम्ह जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन ऽ आवः सबुध्न्या ऽ उपमा ऽ अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा॥

इदं ब्रम्हणे न मम। इति प्रत्यधिदेवताः।

## अथ दशदिक्पालाः

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा॥

इन्द्रमिन्द्राय न मम।

ॐ अग्निदूतं पुरो दधे हव्यवाहमुपब्रुवे। देवाँ २ऽ आसादयादिह स्वाहा॥

इदमग्नये न मम।

ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे । देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳस्पृशस्पाहि । अर्चिरसि शोचिरसि तपोसि स्वाहा ॥

इदं यमाय न मम । अत्र प्रणीतोदकस्पर्शः ।

ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सा तऽइत्यानमो देवि निर्ऋते तुभ्यमस्तु स्वाहा ॥

इदं निर्ऋतये न मम । अत्र प्रणीतोदकस्पर्शः ।

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्य ऽ ऋतसदन्यसि वरुणस्यऽ ऋतसदनमसि वरुणस्यऽऋतसदन मासीद स्वाहा ॥

इदं वरुणाय न मम ।

ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सो मपीतये स्वाहा ।

इदं वायवे न मम ।

ॐ सोमो धेनुꣳ सोमोऽअर्वन्तमाशुꣳ सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यꣳ सभेयं पितृश्रवणं यो ददाशदस्मै स्वाहा ॥

इदं सोमाय न मम

ॐ तमीशानञ्जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्ध स्वस्तये स्वाहा ॥

इदमीशानाय न मम । अत्र प्रणीतोदकस्पर्शः ।

ॐ ब्रम्ह जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन ऽ आवः । सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा ।

इदं ब्रह्मणे न नम ।

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् स्वाहा ।

इदमनन्ताय न मम । इति दशदिक्पालाः ।

## अथाष्टवसवः

ॐ सुगा वो देवाः सदना ऽ अकर्म य आजग्मेदꣳ सवनञ्जुषाणाः । भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा ॥

इदं ध्रुवाद्यष्टवसुभ्यो न मम ।

## अथ द्वादशादित्याः

ॐ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः

आवोर्वाची सुमतिर्ववृत्याद<sup></sup>ꣳ होश्चिद्या वरिवोवित्तरासत् स्वाहा ॥

इदं धात्रादिद्वादशादित्येभ्यो न मम ।

## अथैकादशरुद्राः

ॐ य ऽ एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे । तेषाꣳ सहस्रयोजने वधन्वानि तन्मसि स्वाहा ॥

इदं वीरभद्राद्येकादशरुद्रेभ्यो न मम । अत्र प्रणीतोदकम्पशः ।

## अथ षोडशमातरः

ॐ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषि सहस्राक्षरा परमे व्योमन् स्वाहा ॥

इदं गौर्यादिषोडशमातृभ्यो न मम ।

## अथावहादिसप्तमरुतः

ॐ मरुतो यस्य हि क्षये पाथा दिवोविमहसः । ससुगोपातमो जनः स्वाहा ॥

इदमावहादि सप्तमरुद्भ्यो न मम ।

## अथ विनायकादिषट्

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ

हवामहे निधीनान्त्वा निधिपतिँ हवामहे वसो मम । आहम-
जानि गर्भधमा त्वमजासि गर्भधम् स्वाहा ।

इदं विनाकाय न मम ।

ॐ ब्रम्ह जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरचो वेनऽआवः
स बुध्न्या ऽ उपमाऽ अस्य विष्ठाः सतश्च योनिमसतश्च विवः
स्वाहा ॥

इदं ब्रह्मणे न मम ।

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपा
ँसुरे स्वाहा ॥

इदं विष्णवे न मम ।

ॐ मा नस्तोके तनये मा न ऽ आयुषि मा नो गोषु मानो ऽ
अश्वेषु रीरिषः । मा नो विरान्रुद्र भामिनो वधीर्हविष्मन्तः
सदमित्वा हवामहे स्वाहा ।

इदं रुद्राय न मम । अत्र प्रणीतोदकस्पर्शः ।

ॐ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म ऽ
आसन् । अर्कस्त्रिधातू रजसो विमानोजस्रो घर्मो हविरस्मि
नाम स्वाहा ॥

इदमर्काय न मम ।

ॐ वनस्पते वीड्वङ्गी हि भूया ऽ अस्मत्सखा प्रतरणः सुवीरः । गोभिः सन्नद्धो ऽ असि वीडयस्वास्थाता ते जयतु जेत्वानि स्वाहा ।

इदं वनस्पतये न मम ।

## (द) अथ विशेषकर्म

अत्र विशेषोद्देश्याभिमतं कर्मकृत्वा तत्पश्चादेव वदुत्तरं कर्म कर्वन्ति १ ॥

## (ध) अथ चतुः स्वस्त्यादि होमः

ॐ स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु स्वाहा ।

इदं चतुःस्तिभ्यो न मम ।

ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः। पयस्वतीः प्रदिशः सन्तु मह्यम् स्वाहा ॥

इदं पयपञ्चभ्यो न मम ।

ॐ विष्णोरराटमसि विष्णोः श्नप्त्रे त्थो विष्णोः स्यूरसि विश्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा स्वाहा ।

इदं षड्विष्णुभ्यो न मम ।

---

१– जुन उद्देश्य लिएर जुन कर्म गर्न लागिरहेको हो त्यस कर्मको प्रधान देवताको विशेष पूजा होम आदि जे जति गर्नु छ त्यो सबै गरिसकेर मात्र चतुः स्वस्त्यानि होम गर्नुपर्दछ ।

ॐ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता दित्या देवता मरुतो देवता बिश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता स्वाहा।

इदं द्वादशदेवेभ्यो न मम ।

ॐ द्यौः शान्तिरन्तरिक्ष॒ँ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्ति-र्ब्रम्ह शान्तिः सर्व॒ँशान्तिः शान्तिरेव शान्तिः सामाशान्ति रेधि स्वाहा ।

इदं द्वादशशान्तिभ्यो न मम ।

ॐ प्रातरग्नि प्रातरिन्द्र॒ँ हवामहे प्रातर्मित्रावरुणा प्रात रश्विना । प्रातर्भगं पूषणं ब्रम्हणस्पतिं प्रातः सोममुत रुद्र॒ँ हुवेम स्वाहा ।

इदं षट्प्रातर्भ्यो न मम ।

ॐ समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा अनाधृष्याय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा वाताय स्वाहा अवस्यवे त्वा वाताय स्वाहा शिमिदाय त्वा वाताय स्वाहा ॥

इदं षट्वातेभ्यो न मम ।

ॐ अनड्वान्वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती छन्दस्त्र्य विर्वयस्त्रिष्टुप्छन्दो दित्यावाड्वो विराट्छन्दः पञ्चाविर्वयो

गायत्रीछन्दस्त्रिवत्सोवय ऽ उष्णिक्छन्दस्तुर्यवाड्वयोनुष्टुप्छ-
न्दो लोकन्ता ऽ इन्द्रम् स्वाहा ।

इदं ऽनडुद्भ्यो न मम ।

ॐ भगऽ एव भगवाँ २ऽ अस्तु देवास्तेन वयं भगवन्तः स्याम । तं त्वा भग सर्व ऽ इज्जोहवीति स नो भग पुरऽएता भवेह स्वाहा ॥

इदं पञ्चगेभ्यो न मम

ॐ प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥

इदं पञ्चेन्द्रियेभ्यो न मम ।

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्य ऽ ऋतसदनमासीद स्वाहा ॥

इदं पञ्चवरुणेभ्यो न मम ।

ॐ गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा स्वाहा ॥

इदं गायत्र्यै न मम ।

ॐ उपयामगृहीतोसि सावित्रोसि चनोधास्चनोधा ऽ असि चनो मयि धेहि । जिन्व यज्ञं यज्ञपतिंभगाय देवा यत्वा सवित्रे स्वाहा ॥

इदं सावित्र्यै न मम ।

ॐ सरस्वती योन्याङ्गर्भ मन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति । अप ँ रसेन वरुणो न साम्नेन्द्रꣳ श्रियै जनयन्नप्सु राजा स्वाहा ॥

इदं सरस्वत्यै न मम ।

ॐ गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि । ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः स्वाहा ॥

इदं गृहामात्रे न मम ।

ॐ अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्रदातारं तारिषः ऽ ऊर्जं नो धेहि द्विपदे चतुष्पदे स्वाहा ॥

इदमन्नपूर्णायै न मम ।

ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽ इषाण स्वाहा ॥

इदं महालक्ष्म्यै न मम ।

ॐ देवीर्द्वारऽइन्द्रꣳ सङ्घाते वीड्वीर्यामन्नबर्धयन् । आवत्सेन तरुणेन कुमारेण च मीवता पार्वाणꣳरेणुककाटं नुदन्तां वसुवने वसुधेयस्य व्यन्तु यज स्वाहा ॥

इदं महारिष्टविनाशिन्यै न मम ।

ॐ अम्बेऽअम्बिकेम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा ॥

इदं चण्डचै न मम

ॐ द्यौरासीत्पूर्वचित्तिरश्वऽआसीद्बृहद्वयः । अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला स्वाहा ॥

इदं द्यौराल्यै न मम ।

ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा ॥

इदं वास्तुदेवाय न मम ।

ॐ भूम्याऽआखूनालभतेन्तरिक्षाय पाङ्क्त्रान् दिवे कशान्दिग्भ्यो नकुलान्वभ्रुकानवान्तरदिशाभ्यः स्वाहा ॥

इदं भूमिदेवाय न मम ।

ॐ नमः शम्भवाय च मयो भवाय च नमः शङ्कराय च मयस्काराय च नमः शिवाय च शिवतराय च स्वाहा ॥

इदं गैडुदेवाय न मम ।

ॐ क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि । मा त्वा हिꣳसीन्मा मा हिꣳसीः स्वाहा ॥

इदं क्षेत्रपालाय न मम ।

ॐ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यदेनश्चकृमा वयमिदन्तदवयजामहे स्वाहा ॥

इदं ग्रामदेवाय न मम ।

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवे हवे सूहवꣳशूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा ॥

इदं स्वर्गेन्द्राय न मम ।

ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु । येऽन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा ॥

इदं पातालवासुकिभ्यो न मम ।

ॐ मित्रोनऽ एहि सुमित्रधऽइन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् । स्वान भ्राजाङ्घारे वम्भारे हस्त सुहस्त कृशानवे ते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् स्वाहा ॥

इदं मित्रलोकपालाय न मम ।

ॐ राजन्तमध्वराणाङ्गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे स्वाहा ॥

इनं मान्धात्रे न मम ।

ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषा꣸ सहस्रयोजनेव धन्वानि तन्मसि स्वाहा ॥

इदं तीर्थराजाय न मम ।

ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते स्वाहा ॥

इद वृतराजाय न मम ।

ॐ प्राच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहार्वाच्यै दिशे स्वाहावाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ।

इदं पुर्नादिक्पालेभ्यो न मम ।

ॐ अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य चतुर्थ्यदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुता ँ सप्तमी बृहस्पतेरष्ट म्यर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी स्वाहा ॥

इदं तिथिभ्यो न मम ।

ॐ नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहा र्धमासेभ्यः स्वाहा मासेभ्यः स्वाहा ऋतुभ्यः स्वाहार्त्तवेभ्यः स्वाहा संवत्सराय स्वाहा द्यावापृथिवीभ्या ँ स्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः स्वाहा रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥

इदं नक्षत्रेभ्यो न मम ।

ॐ योगे योगे तवस्तरं वाजे वाजे हवामहे ॥ सखायऽ इन्द्रमूतये स्वाहा ॥

इदं योगेभ्यो न मम ।

ॐ आदित्यं गर्भं पयसा समङ्धि सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्धि हरसा माभिमᳪ स्थाः शतायुषं कृणुहि चीयमानः स्वाहा ॥

इदं वारेभ्यो न मम ।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाᳫंसस्तनूभिर्व्यशेमहि देवहितं यदायुः स्वाहा

इदं करणेभ्यो न मम ।

ॐ वायो ये ते सहस्रिणो रथासस्ते भिरागहि । नियुत्वान्त्सोमपीतये स्वाहा ॥

इदं वातेभ्यो न मम ।

ॐ वाताय स्वाहा धूमाय स्वाहाभ्राय स्वाहा मेघाय स्वाहा विद्योतमानाय स्वाहा स्तनयते स्वाहावस्फूर्जते स्वाहा वर्षते स्वाहावर्षते स्वाहोग्रं वर्षते स्वाहा शीघ्रं वर्षते स्वहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा प्रुष्णते स्वाहा शीकायते स्वाहा प्रुष्वाभ्यः स्वाहा ह्रादुनीभ्यः स्वाहा निहाराय स्वाहा ॥

इदं मेघेभ्यो न मम ।

ॐ समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवᳪ सवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्याहाहोरात्रे गच्छ स्वाहा छन्दाᳫंसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञं गच्छ

स्वाहा सोमं गचछ स्वाहा दिव्यं नभो गचछ स्वाहाग्नि वैश्वानरङ्गचछ स्वाहा मनोमे हार्दि यचछ दिवं ते धूमो गचछतु स्वर्ज्योतिः पृथवीं भस्मना पृण स्वाहा ॥

इदं समुद्रेभ्यो न मम ।

ॐ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदं गन्धर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्यऽउन्मत्तꣳ सर्पदेवजनेभ्योप्रतिपदमयेभ्यः कितवमीर्यताया ऽ अकितवं पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम् स्वाहा ॥

इदं नदीभ्यो न मम ।

ॐ इष्टो यज्ञो भृगुभिराशीर्दा वसुभिः । तस्य नऽ इष्टस्य प्रीतस्य द्रविणेहागमेः स्वाहा ॥

इदमीष्टदेवाय न मम ।

ॐ कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः। अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रम्ह पीपिहि सौभगाया-शिवनाध्वर्यू सादयतामिह त्वा स्वाहा ॥

इदं कुलदेवाय न मम ।

यत्र स्थापितो यो देव स्तत्तन्मन्त्रेण होमयेत्

ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च स्वाहा ॥

इदं भैरवाय न मम ।

ॐ देवीर्द्वार ऽ इन्द्रꣳ सङ्घाते वीड्वीर्यामन्नवर्धयन् । आवत्सेन तरुणेन कुमारेण च मीवता पार्वाणꣳ रेणुककाटन्नु- दन्तां वसुवने वसुधेयस्य व्यन्तु यज स्वाहा ॥

इदं भैरव्यै न मम ।

ॐ अम्बे ऽ अम्बिकेम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा ॥

इदं विन्ध्यवासिन्यै न मम ।

यत्र स्थानविशेषाधिष्ठितो यो देवो देवी वा तत्तन्मन्त्रेण होमयेत् ।

ॐ एषोह देवः प्रदिशो नु सर्वाः पूर्वो ह जातः सऽउ गर्भेऽ अन्तः । सऽएव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतो मुखः स्वाहा ॥

इदं सर्वभ्यो देवेभ्यो न मम ।

ॐ शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योति- ष्माँश्च । शुक्रश्चऽऋतपाश्चात्यꣳ हाः स्वाहा ॥

इदं सर्वहोमपूरणार्थेभ्यो न मम ।

ॐ राजन्तमध्वराणाङ्गोपामृतम्य दीदिविम् । वर्धमानꣳ स्वे दमे स्वाहा ॥

इदं पञ्चपाण्डवेभ्यो न मम ।

ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चाभि- युग्वा च विक्षिपः स्वाहा ॥

इदं भीमसेनाय न मम ।

ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधा-यिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यःस्वधा नमः । अक्षन् पितरोमीमदन्त पितरोतीतृपन्त पितरःपितरः शुन्धध्वम् स्वाहा ॥

इदं पितृभ्यो न मम ।

अत्र प्रणीतोदक स्पर्शः ।

ॐ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रङ्-घर्ममीमहे । उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वा-नराय त्वा स्वाहा ॥

इदं वैश्वानराय न मम ।

ॐ वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानाम भिश्रीः। इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण। उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा स्वाहा ।

इदं वैश्वानराय न मम ।

ॐ वैश्वानरो नऽऊतयऽआ प्रयातु परावतः अग्निरुक्थेन वाहसा। उपयामगृहीतोसि वैश्वानराय त्वैष ते योनिर्वैश्वानराय त्वा स्वाहा ॥

इदं वैश्वानराय न मम ।

ॐ आकाशे यानि तीर्थानि यानि तीर्थानि भूतले ।
पाताले यानि तीर्थानि सर्व तीर्थ नमोऽस्तुते स्वाहा ॥

ॐ आकाशे सन्ति ये देवा ये देवाः सन्ति भूतले ।
पाताले सन्ति ये देवाः सर्वदेव नमोऽस्तु ते स्वाहा ॥

ॐ आकाशे यानि लिङ्गानि यानि लिङ्गानि भूतले ।
पाताले यानि लिङ्गानि सर्वलिङ्ग नमोऽस्तु ते स्वाहा ॥

ततो हुतशेषहविर्द्रव्यं गृहीत्वा ब्रह्मान्वारब्धः स्विष्टकृद्धोमं कुर्यात्[१]

ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम। ततः संस्रवप्राशनम् ।

ततो महाव्याहृत्यादि उत्तराङ्गहोम । तद्यथा

ॐ महाव्याहृतीनां प्रजापतिऋषिरग्निवायुसूर्या देवता गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्न्याधाने विनियोगः ।

ॐ भूः स्वाहा । इदमग्नये न मम । प्रोक्षणीपात्रेऽपि ।

ॐ भुवः स्वाहा । इदं वायवे न मम । प्रोक्षणीपात्रेऽपि ।

ॐ स्वः स्वाहा । इदं सूर्याय न मम । प्रोक्षणीपात्रेऽपि । एता महाव्याहृतयः ।

ॐ त्वन्नोऽअग्न इति वामदेवऋषिरग्नीवरुणौ देवते त्रिष्टुप्छन्द आज्यहोमे विनियोगः ।

**ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो वन्हितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् स्वाहा ॥**

इदमग्नीवरुणाभ्यां न मम । प्रोक्षणीपात्रेऽपि ।

ॐ स त्वन्नोऽअग्न इति वामदेवऋषिरग्नीवरुणौ देवते त्रिष्टुप्छन्द आज्यहोमे विनियोगः ।

---

१– यद्यपि प्रचलित पद्धतिहरूमा प्रजापतिहोमसम्मको सम्पूर्ण होम समाप्ति भएपछि सबैभन्दा पछाडि 'स्विष्टकृद् होम' राखिएको छ तापनि "प्राङ्महाव्याहृतिभ्यः स्विष्टकृद् अन्यच्चेदाज्याद्धविः" अर्थात् आज्यहविदेखि अतिरिक्त चरु आदि अन्य हविहरू पनि भएको यज्ञमा महाव्याहृतिहोमभन्दा अगाडि स्विष्टकृद्धोम गर्नु भन्ने सूत्र वचन र शिष्ट प्रयोग पनि देखिएकोले यहाँ पनि महाव्याहृतिहोमभन्दा अगाडि स्विष्टकृद्धोम राखिएको छ ।

ॐ स त्वन्नोऽ अग्नेवमो भवोती नेदिष्ठो ऽ अस्याऽ उषसो व्युष्टौ । अवयक्ष्व नो वरुण॰ँ रराणो वीहि मृडीक॰ँ सुहवो नऽ एधि स्वाहा ।

इदमग्नीवरुणाभ्यां न मम । प्रोक्षणीपात्रेऽपि ।

ॐ अयाश्चाग्न इति वामदेवऋषिरग्निर्देवता त्रिष्टुप्छन्दः प्रायश्चित्तहोमे विनियोगः ।

ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमयाऽ असि । अया नो यज्ञं वहास्यया नो धेहि भेषज॰ँ स्वाहा ॥

इदमग्नये न मम । प्रोक्षणीपात्रेऽपि ।

ॐ ये ते शतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो वरुणः सविताविष्णुर्विश्वेदेवा मरुतः स्वर्का देवता प्रायश्चित्तहोमे विनियोगः ।

ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽ अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम । प्रोक्षणीपात्रेऽपि ।

ॐ उदुत्तममिति शुनः शेपऋषिस्त्रिष्टुप्छन्दो वरुणो देवता पाशान्मोचने विनियोगः ।

ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यम॰ँश्रथाय । अथावयमादित्यव्रते तवानागसो अदितये स्याम स्याहा ॥

इदं वरुणाय न मम । प्रोक्षणीपात्रेऽपि ।

ॐ प्रजापतय इति प्रजापतिऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः ।

ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । (इति मनसा)

एवं होमं समाप्याग्नेः स्थापितदेवतानां चोत्तरपूजनं कार्यम्

ॐ अद्येत्यादि पूर्वसङ्कल्पसिद्धिरस्तु मम कृतस्यामुककर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां मृडाग्नेश्चोत्तरपूजनं करिष्ये । इति सङ्कल्प्य,

**ॐ अग्ने नय सुपथा रायेऽअस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम ऽ उक्तिं विधेम ॥**

(ॐमृडाग्नये नमः १ । इति गन्धाद्युपचारैः सम्पूज्य स्थापितदेवताश्च गन्धाद्युपचारैः। सम्पूजयेत् । अनया पूजया मृडाग्निः स्थापितदेवताश्च प्रीयन्तां न मम इति)

ततो होता– ॐ अद्येत्यादि कृतस्यामुककर्मणः परिपूर्णतासिद्ध्यर्थं पूर्णाहुतिं होमयिष्ये । इति सङ्कल्प्य,

**ॐ मूर्धानन्दिवो ऽ अरतिं पृथिव्याः वैश्वानरमृतऽ आजातग्निम् । कविꣳ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः स्वाहा ॥**

इति पूर्णाहुतिं होमयेत् ।

स्रुवश्च मऽइति स्रुवपूजनम्

**ॐ स्रुवश्च मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्चमेधिषवणे च मे पूतभृच्चम आधवनीयश्च मे वेदिश्च मे वर्हिश्च मेवभृथश्च मे स्वगाकाराश्च मे यज्ञेन कल्पन्ताम् ॥**

---

१– यद्यपि स्थापितदेवताहरूको उत्तराङ्गपूजा र मृडाग्निपूजा प्रचलित अग्निस्थापनपद्धतिहरूमा छैन तापनि राम्रु उचित संझिएकोले प्रक्षेप जस्तो गरी यहाँ राखिन गएको छ ।

मृडाग्निलक्षणम्– 'पूर्वप्रज्वलितो ह्यग्निर्हविर्द्रव्यबुभुक्षितः ।
तृप्तो निर्धूमनिर्ज्वालो मृडाग्निः परिकीर्तितः ।

## (न) अथ पूर्णपात्रदानम्

रौप्यं ताम्रं मृण्मयं वा यत्संभवं पात्रं फलवस्त्रद्रव्यसहितं षट्पञ्चाशदधिकद्विशत-मुष्टिपरिमितं बहुभोक्तृपुरुषाहारपरिमितं वा तण्डुलयुतं पूर्णपात्रमादाय पूर्णादर्वीति पूर्णपात्रं ब्राह्मणं च त्रिः सम्पूज्य

**ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहाऽइषमूर्जꣳ शतक्रतो ।**

ॐ अद्येहेत्यादि अस्मिन्नमुककर्माङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूप ब्रह्मकर्म-प्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय तुभ्य-महं संप्रददे । इति सङ्कल्प्य पूर्णपात्रं ब्रह्मणे दद्यात् । ॐ स्वस्तीति प्रतिवचनम् । ततः प्रणीताविमोकः

**ॐ सुमित्रिया नऽआपऽओषधयः सन्तु ।**

इतिमन्त्रेण पवित्राभ्यां प्रणीतोदकेन कर्तुः शिरः सम्मृज्य

**ॐ दुर्मित्रियास्तस्मै सन्तु योस्मान् द्वेष्टि यञ्च वयं द्विष्मः ।**

इति मन्त्रेणैशान्यां प्रणीतापात्रं न्युब्जीकुर्यात् ।

ततस्तरणक्रमेणैव बर्हिरुत्थाप्य आज्येनाभिधार्य'देवा गातुविद' इति पठित्वा हस्तेनैव होमयेत् ।

**ॐ देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पतऽइमन्देव यज्ञꣳ स्वाहा वाते धाः स्वाहा ॥**

इति बर्हिर्होमः ।

## (प) अथ महाबलिः

माषतण्डुलाद्यन्नकुङ्कुमादिगन्धरक्तपुष्पादियुतं सदीपं सवस्त्रं सदक्षिणं सजलं बलिं क्षेत्रपालाय दद्यात् । तत्र मन्त्रः

ॐ क्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनी वेतालादिपरिवारयुताय इमं बलिंसमर्पयामि, भो भो क्षेत्रपाल! इमं बलिं गृहाण, मम यजमानस्य आयुः कर्ता क्षेमकर्ता वरदस्तुष्टिदो भव ।

इति पठित्वा बलिं शूद्रेण ब्राह्मणेन वा चतुष्पथे विसर्जयेत् ।

तत आचार्यः प्रक्षालितपाणिपाद आचामेत् ।

## (फ) यज्ञान्तगोदानम्

यजमानोऽग्नेःपश्चिमभागे प्राङ्मुख उपविश्य उदङ्मुखेभ्य आचार्यऋत्विगादिभ्यो दक्षिणां दद्यात् ।

तत्रादौ गोपूजनम्

ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयिभ्य एव च ।
नमो ब्रम्हसुताभ्यश्च पवित्राभ्यो नमो नमः ॥

ॐ इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या। व्यस्कभ्ना रोदसी विष्णवे ते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥

इति मन्त्रद्वयेन गां त्रिः सम्पूज्य,

ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥

इति मन्त्रेण ब्राह्मणं त्रिः सम्पूजयेत् ।

ततः कुशजलेन गामभ्युक्ष्य गोपुच्छं गृहीत्वा पूर्वं तर्पयित्वा पश्चात् स्वशिरसि अभिषिञ्चेदनेन मन्त्रेण

ॐ मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्।

ततः कुशादिसहितं गोपुच्छमादाय

ॐ तत्सत् विष्णुः ३ इत्यादि देशकालौ स्मृत्वा (अमुक) गोत्रः (अमुक) प्रवरः (अमुक) शर्माहं (श्रीरमुक) देवताप्रीतये (अमुक) कर्माङ्गत्वेन कृतस्य यथालब्धोपचारैः पूजनपूर्वकहवनकर्मणः साङ्गतासिद्धये अस्य कर्मणः साद्गुण्यफलावाप्तये इमां गां रुद्रदैवतां तत्प्रत्याम्नायीभूतं (अमुक) द्रव्यम् (अमुक दैवतं वा) (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।

प्रार्थना

ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणी।
तीर्थदेवमयी यस्मात्तस्माच्छान्तिं प्रयच्छ मे।

ततो दानप्रतिष्ठार्थं कुशादिसहितं द्रव्यमादाय

ॐ अद्य कृतैतदमुककर्मणः साङ्गतासिद्धिद्वारा श्रीपरमेश्वरप्रीतये गोदानप्रतिष्ठार्थमिदं द्रव्यं रजतखण्डं चन्द्रदैवतं (ताम्रखण्डं श्रीसूर्यदैवतं वा) (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।

ब्राह्मणश्च ॐ स्वस्तीत्युक्त्वा कोदादिति कामस्तुतिं पठेत्

ॐ कोदात् कस्माऽअदात् कामोदात् कामायादात्।
कामोदाता कामः प्रतिग्रहीता कामैतत्ते॥

इति

## (ब) अथ मेधाकरणम्

घृतपूर्णस्रुवे नारिकेलपूगीफलादिकं चन्दनपुष्पाणि च निधाय घृतधारां पातयन् होमयेदेभिर्मन्त्रैः

ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधा-
मया सिष॑ स्वाहा ॥

ॐ यां मेधां देवगणाः पितरश्चोपासते। तया मामद्य
मेधयाग्ने मेधाविनं कुरू स्वाहा ॥

ॐ मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः। मेधा-
मिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ॥

ॐ आकूतिमग्निं प्रयुज॑ स्वाहा वाचो विधृतिमग्निं
प्रयुज॑ स्वाहा प्रजापतये मनवे स्वाहाग्नये वैश्वानराय
स्वाहा ॥

ॐ सप्त तेऽ अग्ने समिधः सप्तजिव्हाः सप्त ऽ ऋषयः
सप्तधाम प्रियाणि। सप्तहोत्राः सप्तधा त्वा यजन्ति सप्त
योनीरापृणस्व घृतेन स्वाहा ॥

ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्री-
णावहाऽइषमूर्ज॑ शतक्रतो ॥

ॐ इदं मे ब्रम्ह च क्षत्रञ्चोभे श्रियमश्नुताम्। मयि
देवा दधतु श्रियमुत्तमां तस्यैते स्वाहा ॥

## (भ) शेषचरुहोमः

तत्रादौ एधोसीति वस्त्रहोमः, अभ्यादधामीति शेषचरुहोमः
यजमानः सपरिवारो बन्धुवर्गैः सह घृताक्तवस्त्रचन्दनपुष्पफलचर्वादिभिरग्निं
सम्पूजयेदनेन मन्त्रेण

ॐ एधोस्येधिषीमहि समिदसि तेजोसि तेजो मयि धेहि। समाववर्ति पृथिवी समुषाः समुसूर्यः समुविश्वमिदं जगत्। वैश्वानरञ्ज्योतिभूयासं विभून्कामान्व्यश्नवै भूः स्वाहा॥

इति वस्त्रहोमः।

ततः शेषचरुहोमः

ॐ अभ्यादधामि समिधमग्ने व्रतपते त्वयि। व्रतञ्च श्रद्धाञ्चोपैमीन्धे त्वा दीक्षितोऽअहम्॥

ॐ यत्र ब्रम्ह च क्षत्रञ्च सम्यञ्चौ चरतः सह। तँल्लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना॥

ॐ यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतः सह। तँल्लोकं पुण्यं प्रज्ञेषं यत्र सेदिर्न विद्यते स्वाहा॥

इति शेषचरुहोमः।

ततः स्रुवेण भस्म किञ्चिद् गृहीत्वा अवशिष्टाज्येन पिष्ट्वा तत्तिलकं हस्तेन स्पृष्ट्वाभिमन्त्रयेदनेन मन्त्रेण।

ॐ अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपालऽइन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविँशाभ्यां वैराजाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय चरुः सवित्रऽऔष्णिहाय त्रयस्त्रिँशाय रैवताय द्वादशकपालः प्राजापत्यश्चरूरदित्यै बिष्णु-

पत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोनुमत्या ऽ अष्टा कपालः ॥

ततो यजमानस्य तिलकं कुर्यात् ।

ॐ त्र्यायुषञ्जमदग्नेः । इति ललाटे

ॐ कश्यपस्य त्र्यायुषम् । इति ग्रीवायाम् ।

ॐ यद्देवेषु त्र्यायुषम् । इति दक्षिणबाहुमूले ।

ॐ तन्नोऽ अस्तु त्र्यायुषम् । इति हृदि ।

## (म) घृतच्छाया

ततो यजमानो घृते छायां निरीक्ष्य तं ब्राह्मणाय दद्यात् । तत्र क्रमः—(रौप्य-पात्रे ताम्रपात्रे) कांस्यपात्रे वा घृतं सुवर्णं च निधाय तेजोसि, ध्रुवासि इति मन्त्रद्वयं पठन् छायां निरीक्षेत ।

तेजोसीति परमेष्ठीऋषिर्गायत्री छन्दः आज्यं देवता आज्यावेक्षणे विनियोगः।

ॐ तेजोसि शुक्रममृतमायुष्पाऽ आयुर्मे पाहि। देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥

ॐ ध्रुवासि ध्रुवोयं यजमानोस्मिन्नायतने प्रजया पशुभिर्भूयात् । घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया ।

तत आज्यं स्पृष्ट्वा पठेत्

ॐ अलक्ष्मीर्यच्च दौस्थ्यं मे सर्वगात्रेष्ववस्थितम् ।
तत्सर्वं शमयाज्य त्वं लक्ष्मी पुष्टिं च वर्धय ॥
ॐ आज्यं तेजः समुद्दिष्टमाज्यं पापहरं शुभम् ।
आज्यं सुराणामाहारमाज्य लोकाः प्रतिष्ठिताः ॥

ॐ नभोऽन्तरिक्षं दिव्यं वा यन्मे किल्विषमागतम् ।
सर्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु ।।

ततो दूर्वां स्पृष्ट्वा पठेत्

ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ।।

ॐ या क्षीरसागरोत्पन्ना दूर्वा पीयूषसम्भवा ।
तत्संस्पर्शनमात्रेण ह्यायुर्वृद्धिर्यशोबलम् ।।

ततस्तदाज्यपात्रं कुशतिलजलसहितमादाय

ॐ अद्येहेत्यादि मम दुःस्वप्नदुर्निमित्तादिसर्वारिष्टोपशमनपूर्वकमसमानतेजः प्रज्ञाशौर्य यशोबलायुर्लक्ष्मीपुष्टिवर्धनार्थमिदमाज्यं मृत्युञ्जयदैवतं (रौप्यं ताम्रं वा) कांस्यपात्रं चन्द्रदैवतं सुवर्णमग्निदैवतं (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ।

ततो महामृत्युञ्जयः प्रीयतामिति संप्रार्थ्य दानप्रतिष्ठां दद्यात् ।

# (य) अथ भूयसीदक्षिणा विसर्जनं च

तत्रादौ भूयसीदक्षिणादानम्

ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।।

इति देयम् ब्राह्मणं च त्रिः सम्पूज्य कुशादिसहितं दक्षिणाद्रव्यमादाय

हरिः ॐ तत्सद्विष्णुरित्यादि पूर्वसङ्कल्पमुच्चार्य (अमुक) गोत्रः (अमुक) शर्माहं कृतस्यामुककर्मणो (अमुकदेवताप्रीतये कृतस्य पूजनहवनादिकर्मणः) न्यूनातिरिक्त-परिपूरणार्थं यथोक्तफलप्राप्त्यर्थमिदं दक्षिणार्थममुक द्रव्यममुक दैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथायोग्यभागं विभज्य यथाकाले दातुमहमुत्सृजे । इति जले उत्सृजेत् ।

# अथ सिद्धान्नदानम् (आमान्नदानं वा)

ॐ अद्येहामुकगोत्रोऽमुकशर्माहं कृतस्यामुककर्मणो यथावत्फलप्राप्तये नानानाम-गोत्रान्नानानामशर्मणो ब्राह्मणान् यथोपपन्नेनान्नेन भोजयिष्ये (आमान्नपक्षे—सन्तोष-यिष्ये)।

ततो विसर्जनम्

ततः कर्ता देवायार्घ्यं निवेद्य स्वबन्धुवर्गैर्ब्राह्मणैश्च सह यज्ञे देवेषु च पुष्पाक्षताः क्षिपन् यानि कानीति मन्त्रेण यज्ञप्रदक्षिणं कुर्यात्

ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्तु प्रदक्षिणपदे पदे ॥

इति प्रदक्षिणीकृत्य नमस्कुर्यात् ।

ततः पुष्पाक्षतैः ब्रह्माणं संपूज्य 'उत्तिष्ठ ब्रह्मणस्पते' इति विसृज्य उत्थापयेत्

ॐ उत्तिष्ठ बृह्मणस्पते देवयन्तस्त्वेमहे ।
उपप्रयन्तु मरुतः सुदानवऽइन्द्रप्राशुर्भवा सचा ॥

ततो यान्तु देवेति पुष्पाक्षतैरभ्यर्च्य देवान् विसर्जयेत्

ॐ यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥

ॐ गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ।
यत्र बृह्मादयो देवास्तत्र गच्छ हुताशन ॥

ॐ आवाहनं न जानामि न जानामि विसर्जनम् ॥
पूजां चैव न जानामि क्षमस्व परमेश्वर ॥

ततो यस्य स्मृत्येति अच्युतं नमस्कुर्यात्

ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

ॐ अच्युताय नमः ३।

ततः कर्मपात्रावशिष्टजलादिकमादाय

ॐ कायेन वाचा मनसेन्द्रियैर्वा बुद्धयात्मना वानुसृतस्वभावात् ।

करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत् ॥

एतत्कर्म श्रीकृष्णार्पणमस्तु । इतीश्वरं ध्यात्वोत्सृजेत्। ततोऽञ्जलिं वध्वा

ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।

हूयते च पुनर्द्वाभ्यां स मेविष्णु: प्रसीदतु ॥

ॐ विष्णवे नमः ३ । तत्सद्ब्रह्मार्पणमस्त्विति कर्मेश्वरार्पणं कुर्यात्

# (र) अथाभिषेकः प्रसादग्रहणं च

तत्राभिषेकः । आचार्यादयो ब्राह्मणाः शान्तिकलशोदकेन पोराणिकैं वैंदिकैश्च मन्त्रैर्यजमानस्याभिषेकं कुर्युः । तत्रादौ पौराणिका मन्त्राः

ॐ सुरास्त्वामभिषिञ्चन्तु बृह्मविष्णुमहेश्वराः ।

वासुदेवो जगन्नाथ स्तथा सङ्कर्षणो विभुः ॥

प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।२

आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ।

वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।

बृह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥

कीर्तिलक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥

बद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ।

एतास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।

देवदानवगन्धर्वायक्षराक्षसपन्नगाः ॥

ऋषयो मनवो गावो देवमातर एव च ।

देवपत्न्यो द्रुमा नागा दैत्येश्चाप्सरसो गणाः ॥

अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ।।
सरितः सागराः शैला स्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ।।

इति पौराणिका मन्त्राः ।

## अथ वैदिका मन्त्राः

ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन विर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेभिषिञ्चामि ।। (यजुः– २०।४)

ॐ कोसि कतमोसि कस्मै त्वा काय त्वा । सुश्लोकसुमङ्गल सत्यराजन् ।। शिरो मे श्रीर्यशो मुखंत्विषिः केशाश्च श्मश्रूणि । राजा मे प्राणोऽअमृतꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ।। (यजुः– २०।५)

ॐ जिह्वामेभद्रं वाङ्महो मनो मन्युः स्वराड् भाम । मोदाः प्रमोदाऽ अङ्गुलीरङ्गानि मित्रं मे सहः: । । (यजुः– २०।६)

ॐ बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म वीर्यम् । आत्मा क्षत्रमुरो मम ।। (यजुः– २०।७)

ॐपृष्टीर्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणी । ऊरूऽअरत्नी जानुनी विशो मेङ्गानि सर्वतः ।। (यजुः २०।८)

ॐ नाभिर्मे चित्तं विज्ञानं पायुर्मेपचित्तिर्भसत् । आनन्द नन्दावाण्डौ मे भगः सौभाग्यं पसः । जङ्घाभ्यां पद्भ्यां धर्मोस्मि विशि राजा प्रतिष्ठितः । (यजुः २०।६ )

ॐ प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे प्रतिद्यावापृथिव्योः प्रतितिष्ठामि यज्ञे ।। (यजुः २०।१०)

ॐ त्रया देवाऽएकादश त्रयस्त्रिꣳ शाः सुराधसः । बृहस्पति पुरोहिता देवस्य सवितुः सवे । देवा देवैरवन्तु मा ।। (यजुः २०।११)

ॐ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः । सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजुꣳषि सामभिः सामान्यृग्भिर्ऋचः पुरोनु-वाक्याभिः पुरोनुवाक्या याज्याभिर्याज्या वषट्कारैर्वकाराऽ आहु-तिभिराहुतयो मे कामान्त्समर्धयन्तु भूः स्वाहा ।। (यजुः २०।१२)

ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्ति-ब्रम्ह शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सामाशान्ति रेधि ।। (यजुः (३६।१७)

ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ।। (यजुः ३६।२४)

ॐ स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।
(यजुः २५।१९)

ॐ विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्नऽआसुव ॥
(यजुः ३०।३)

ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः ब्रम्हराजन्याभ्याꣳशूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुपमादो नमतु॥
(यजुः २६।२) इत्यभिषेकः ॥

## अथ प्रसादग्रहणम्

तत आचार्यादयो हस्ते प्रसादादिकं गृहित्वा 'आब्रह्मन्' इत्याद्याशीर्वादमन्त्रान् पठेयुः

ॐ आ ब्रम्हन् ब्राम्हणो ब्रम्हवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।
(यजुः– २२।२२)

ॐ दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् । अथोत्वन्दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥
(यजुः– १२।१००)

ॐ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रम्हाणो वसुनीथ यज्ञैः। घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तुयजमानस्य कामाः ॥ (यजुः– १२।४४)

ॐ मनसः काममाकूतिं वाचः सत्यमशीय। पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयताम् ॥ (यजुः– ३९।४)

ॐ आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम्। इदꣳ हिरण्यं वर्चस्व जैत्रायाविशतादुमाम् ॥ (यजुः– ३४।५०)

ॐ न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत्। यो बिभर्ति दाक्षयणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥ (यजुः– ३४।५१)

## अथ रक्षाबन्धनम्

ॐ येन बद्धो बलीराजा दानवेन्द्रो महाबल।
तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥

ॐ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः॥
रक्षा तोकमुतत्मना ॥

॥ इति ॥

## ततस्तिलककरणम्

ॐ त्र्यायुषञ्जमदग्नेः। इति ललाटे।
ॐ कश्यपस्य त्र्यायुषम्। इति ग्रीवायाम्।
ॐ यद्देवेषु त्र्यायुषम्। इति दक्षिणबाहुमूले।
ॐ तन्नोऽअस्तु त्र्यायुषम्। इति हृदि।

ॐ स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु
गोवाजिहस्ति धनधान्यसमृद्धिरस्तु ।
ऐश्वर्यमस्तु विजयोऽस्तु रिपुक्षयोऽस्तु
सन्तानवृद्धिसहिता हरिभक्तिरस्तु ॥

इत्याशीर्वादपुरःसरं ब्राह्मणहस्तेन प्रसादादिकं गृहीत्वा ब्राह्मणान् भोजयित्वा स्वयमपि सुहृद्युक्तो भुञ्जीत ।

॥ इत्यग्निस्थापनविधिः ॥

**शब्दार्थः**

| | | |
|---|---|---|
| १– दारुकम् | = | दाउरा |
| २– समिधा | = | पलाँशका समिधा (दाउरा) |
| ३– प्रणीतापात्रम् | = | यज्ञमा पानी हालेर राख्ने सिप्लिकानको चारकुने पात्र । |
| ४– प्रोक्षणीपात्रम् | = | " " तीनकुने पात्र । |
| ५– उपयमनम् | = | १३ टुक्रा कुश हालेर बनाएको कुशको मुठो । |
| ६– पवित्रम् | = | २ कुशको टुप्पो मिलाएर ग्रन्थि बनाएको । |
| ७– स्फ्यः | = | खयर काठको खड्ग जस्तो आकारमा बनाएको यज्ञपात्र । |
| ८– पात्रासादनम् | = | यज्ञमा आवश्यक पात्र र सामग्रीहरू संस्कारपूर्वक संङ्कलन गरेर राख्नु । |
| ९– इन्धनम् | = | दाउरा |
| १०– पूर्णपात्रम् | = | २५६ मुठी अथवा १ पाथी अथवा २ माना चामल डालो, प्याङ वा टपरी कुनै पात्रमा हालेर जनै, बस्त्र, सुपारी, द्रव्यहरू समेत राखेर ब्रह्मालाई दिइने एक प्रकारको दक्षिणा । |
| ११– मेधाकरणम् | = | सुरोमा जटानरिबल वा सुपारी वस्त्र आदि राखी यजमानले स्पर्श गरेर ब्रह्मा र होताले घृतधारा गरिने कर्म । |

अभ्यासः

१– पञ्चभूसंस्काराः के ? तेषां नामानि लिखत ।
२– स्वस्तिवाचनमन्त्राः कति सन्ति ? तेषां प्रतीकमात्रं लिखत ।
३– पूर्वदिक्पूजनमन्त्रं समग्रं लिखत ।
४– अग्नेः सीमन्तोन्नयनसंस्कारे विनियुक्तो मन्त्रः कः ? समग्रं लिखत ।

५– पात्रासादनमन्त्रं पूरयत ।

६– "समिधाग्निन्दुवस्यत" अस्य मन्त्रस्य विनियोजनस्थलं विचार्यताम् ।

७– स्रुवसंमार्जनमन्त्रं लिखत ।

८– विष्णपूजनमन्त्रः कः ?

९– "चत्वारि शृङ्गा" अस्य मन्त्रस्य कुत्र विनियोगः ?

१०– ब्राह्मणवरणे प्रयोज्यमानानि द्रव्याणि कानि ? ग्रन्थाधारेण लेख्यानि ।

११– पुण्याहवाचनसङ्कल्पवाक्यं लिखत ।

१२– दीपपूजनमन्त्रं पूरयत ।

१३– गणेशप्रार्थनामन्त्रं लिखत ।

१४– "काण्डात्काण्डात्" अस्य मन्त्रस्य विनियोगस्थलं निर्दिश्य मन्त्रं च पूरयत ।

१५– "स्वराडसि" अस्य विनियोगस्थलं विचार्यताम् ।

१६– पञ्चायतनदेवताहोममन्त्राणां प्रतीकानि देयानि ।

१७– "पयः पृथिव्याम्, क्षत्रस्य योनिः, योगे योगे तवस्तरम्" इति प्रतीकात्मकाः मन्त्राः कुत्र कुत्र विनियुज्यन्ते ?

१८– पूर्णपात्रपूजनमन्त्रः कः ? प्रपूरयत ।

१९– यज्ञान्तगोदानवाक्यं समग्रं लिखत ।

२०– प्रसादग्रहणमन्त्रं ग्रन्थानुसारं लिखत ।

**प्रयोगात्मकाः प्रश्नाः**

२१– स्रुवसंस्कारप्रकारं यथाग्रन्थं प्रतिपादयत ।

२२– दीपकलशगणेशपूजाविधिं ग्रन्थाधारेण प्रदर्शयत ।

२३– मेधाकरणप्रयोगं समग्रं प्रतिपादयत ।

## सामान्य अग्नि स्थापना होमको सामग्री

सामान्यपूजा सामग्री भाग १ । कर्मपात्र । कुश । रेखी हाल्ने पीठो र अबिर । धान टपरी ५ । चामल टपरी ६ । कलश ५ । दियो । अर्घत्रिकुटी । पञ्चपात्र, आचमनी । पलाँशका समिधा । आगो बाल्ने दाउरा । प्रणीतापात्र । प्रोक्षणीपात्र । आज्यस्थाली । चरुस्थाली । घिउ । चरु । सुरो । काँचो धागो । सर्पूं । सर्वौषधी । सप्तमृत्तिका, आँप, चाँप, पीपलका पालुवाहरू । जनै । सुपारी । रातो, सेतो वस्त्र । फूल । दूबो । धूप । बत्ती । रोटी नैवेद्य । फलफूल । पानमसला । पञ्चामृत । बोहोता, टपरी । पूर्णपात्र । गाई वा गोमूल्य । क्षेत्र-पालबलि । काँसको कचौरा । सुवर्ण भेटी । दक्षिणा इत्यादि ।

खण्डः ३

# षष्ठिकादेवी पूजा[1]

## (क) विघ्नेश–जन्मदा–षष्ठीदेवी–जीवन्तिका पूजा[2]

षष्ठे दिवसे रात्रेः प्रथमयामे (प्रदोषसमये) पिता कृतनित्यक्रियः हस्तौ पादौ प्रक्षाल्य पूजास्थानमागत्य दीपं प्रज्वलय्य आचम्य कर्मपात्रं कृत्वा कुशत्रयसहितं कर्मपात्रोदकमादय

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥

इत्यात्मानं पूजाद्रव्याणि चाभिषिच्य, ॐ अद्येत्यादिदेशकालौ स्मृत्वा अस्य समातृकस्य शिशोरायुरारोग्यप्राप्तिसकलारिष्टशान्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं

---

१– छैटीका दिनमा षष्ठिका देवीको पूजा हुन्छ । छैटौं दिनमा गरिने हुँदा यसलाई छैटी भनेको हो ।

२– छैटीका दिनमा गरिने विशेष कृत्यहरू

"विघ्नेश जन्मदानां च जीवन्त्याश्च प्रपूजनम् । जातादि पञ्चमे षष्ठे निशीथे बलिमाहरेदिति ।"

"सूतिकावासनिलया जन्मदा नाम देवताः । तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तितेति ।' जन्मनिमित्ताशौचेऽपीत्यर्थः । जननाशौचमध्ये प्रथमषष्ठदशमदिनेषु दाने प्रतिग्रहे च न दोषः ।

"प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वाशौचं न कुर्वन्ति सूतके पुत्रजन्मनि ॥" इति व्यासोक्तेः । अत्र शृतमन्नं तु निषिद्धम् । अत्र कर्तव्यमाह मिताक्षरायां मार्कण्डेयः–

"रक्षणीया तथा षष्ठी निशा तत्र विशेषतः । रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः । पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।" इति । सूतिकागृहं शस्त्रमुसलाम्बुविभूतियुतं कार्यम् । सर्षपांश्च सर्वतोऽविकिरेत् । अन्यदपि यथाऽऽचारं सर्वं कार्यम् । जन्मदाभ्योऽन्नादिना बलिर्देयः ।

एतत्प्रतिमाश्च चन्दनादिना कुड्ये लेखनीयाः । पीठादौ अक्षतपुञ्जरूपेण वा निवेश्याः । इति विशेषः ।

विघ्नेशस्य जन्मदानां षष्ठीदेव्या जीवन्तिकायाश्च यथामिलितोपचारैः पूजनं करिष्ये ।

इति प्रतिज्ञासङ्कल्पं विधाय सर्षपान् विकिरेत्

ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।
सर्वेषामविरोधेन पूजाकर्म समारभे ॥

ततः सर्षपदूर्वाराजिकादिभिः पीतवस्त्रे पोटलिकां विधाय सूतिकोपरि रक्षार्थं लम्बयेत् । तां सर्वकर्मान्ते काण्डेन भिन्द्यादिति समाचारः ।

ततः सूतिकागृहादवहिः क्षेत्रपालादिभ्यो बलिं दद्यात्

ॐ क्षेत्रपाल नमस्तुभ्यं सर्वशान्तिफलप्रदः ।
बालस्य विघ्ननाशार्थमिमं गृह्ण बलिं मम ॥
दैत्यभूतपिशाचाश्च रक्षन्तु सर्वतो गणाः ।
शुभं कुर्वन्तु मे सर्वं मम गृह्णन्त्विमं बलिम् ॥ इति ।

ततः सूतिकाद्वारमध्ये गणपतिं सम्पूज्य प्रार्थयेत्

ॐ सर्वविघ्नहरोऽसि त्वं एकदन्त गजानन ।
षष्ठीगृहेऽर्चितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥
लम्बोदर महाकाय सर्वोपद्रवनाशन ।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥ इति ।

ततो द्वारदक्षिणे– ॐ क्षेत्रपालाय नमः । द्वारवामे– ॐ दुर्गायै नमः । इति नाममन्त्रेण पूजयेत् ।

ततः, ॐ नमोऽस्त्वनन्तायेति दीपं सम्पूज्य, ॐ भूरसीत्यादि कलश स्थापन विधिना कलशं संस्थाप्य तत्र– ॐ तत्त्वा यामीति कलशं संपूज्य, ॐ गणानान्त्वेत्यादिना गणेशं च यथाविधि पूजयेत् ।

पुनः कलशे– ॐ नमः शम्भवायेति मृत्युञ्जयम्, ॐ श्रीश्च त इति उमाम्, ॐ विष्णो रराटमिति विष्णुं च सम्पूज्य प्रार्थयेत्

ॐ त्रैलोक्यपूजित ! सौम्य ! सदा विजयवर्धन ! ।
शान्तिं कुरु गदापाणे ! नारायण नमोऽस्तु ते ॥

ततः सूर्यादिनवग्रहान् तत्तन्मन्त्रेण सम्पूज्य तिथिवारनक्षत्रयोगकरणमासराशिमुहूर्तांश्च नाममन्त्रेण पूजयेत् । पीठादावक्षतपुञ्जेषु मार्कण्डेयं व्यासं अश्वत्थामानं परशुरामं कृपाचार्यं बलिं हनूमन्तं विभीषणञ्चावाह्य यथालब्धोपचारैः पूजयेत्

ततो विघ्नेशस्य जन्मदायाः षष्ठीदेव्या जीवन्तिकायाः शस्त्रगर्भाभगवत्याः प्रतिमाश्च लेपनादिना कुड्ये लेखनीयः । गोमयप्रतिमायां पीठादावक्षतपुञ्जेषु वा स्वसंप्रदायानुरोधेन प्रतिष्ठाप्य 'ॐ श्रीश्च ते०' इति मन्त्रेण पृथक् पृथङ नाममन्त्रेण एकतन्त्रेण वा षोडशोपचारैः पूजयेत् ।

तत्रादौ प्राणप्रतिष्ठा

**ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु । विश्वेदेवासऽइह मादयन्तामो ३ प्रतिष्ठ ॥**

इति प्राणान् प्रतिष्ठाप्य ध्यानम्

ॐ देवीमञ्जनसङ्काशां चन्द्रार्धकृतशेखराम् ।
सिंहारूढां जगद्धात्रीं कौमारीं भक्तवत्सलाम् ॥
खड्गं खेटं च बिभ्राणामभयं वरदं तथा ।
तारकाहारभूषाढ्यां चिन्तयामि नवांशुकाम् ॥

ॐ विघ्नेशाय नमः । ॐ जन्मदायै नमः । ॐ महाषष्ठीदेव्यै नमः । ॐ जीवन्तिकायै नमः । ॐ शस्त्रगर्भा भगवत्यै नमः । इति क्रमेण ध्यायेत् ।

आवाहनम्

ॐ आयाहि वरदे देवि महाषष्ठीति विश्रुते ।
शक्तिभिः सह बालं मे रक्ष रक्ष वरानने ।।
आगच्छ वरदे देवि स्थाने चात्र स्थिरा भव ।
आराधयामि भक्त्या त्वां रक्षबालं च सूतिकाम् ।।

ॐ विघ्नेशमावाहयामि, जन्मदामावाहयामि, महाषष्ठीदेवीमावाहयामि जीवन्तिकामावाहयामि, शस्त्रगर्भाभगवतीमाराधयामी इति क्रमेण आवाहयेत् ।

आसनम्

ॐ सन्ध्यारागनिभं रक्तमासनं स्वर्णनिर्मितम् ।
गृहाण सुमुखी भूत्वा रक्ष बालं च सूतिकाम् ।।

आसनं समर्पयामि विघ्नेशजन्मदाषष्ठीदेवीजीवन्तिकाशस्त्रगर्भाभगवतीभ्यो नमः ।

पाद्यम्

ॐ गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् ।
पाद्यं गृहाण मे बालं सूतिकां चैव पालय ।।

पाद्यं सम० ।

अर्घ्यम्

ॐ गन्धपुष्पाक्षतैराढ्यमर्घ्यार्थं निर्मलं जलम् ।
गृहाण पाहि मे पुत्रं सूतिकाभयहारिणी ।।

अर्घ्यं सम० ।

आचमनीयम्

ॐ गृहाणाचमनीयं तु कर्पूरैलादिवासितम् ।
सबालां सूतिकां पाहिं जगन्मातर्नमोऽस्तु ते ।।
आचमनीयं समर्प० ।

पञ्चामृतम्

ॐ पञ्चामृतं गृहाणेदं पयोदधिघृतं मधु ।
शर्करासहितं देवि पाहि बालं समातृकम् ।।

पञ्चामृतं समर्प० ।

शुद्धोदकस्नानम्

ॐ गङ्गाजलं मयाऽऽनीतं स्नानार्थं ते सुरेश्वरि ।
गृहाण श्रेष्ठं पानीयं रक्ष त्वं बालसूतिके ।।

शुद्धोदकस्नानं समर्प० । स्नानाङ्गमाचमनीयं च दत्त्वा

वस्त्रम्

ॐ दुकूलादिमयं देवि नानारत्नैः परिष्कृतम् ।
परिधत्स्वामलं वस्त्रं रक्ष मे सुतसूतिके ।।

वस्त्रं सम० ।

अलङ्कारान्

ॐ नानारत्नमयं दिव्यं मुक्ताहारमयं शुभम् ।
गृहाण कालरात्रि ! त्वं रक्ष मे सुतसूतिके ।।

अलङ्कारान् सम० ।

चन्दनम्

ॐ कर्पूरागरुकस्तूरी कङ्कोलादिसमन्वितम् ।
चन्दनं स्वीकुरु त्वं मे रक्ष बालं च सूतिकाम् ।।

चन्दनम् सम० ।

परिमलद्रव्यम्

ॐ हरिद्राकुङ्कुमादीनि नाना परिमलानि च ।
गृहाण सुभगे देवि रक्ष बालं च सूतिकाम् ।।

परिमलद्रव्यं समर्प० ।

अक्षताः

ॐ अक्षतान् धवलान् देवि गृहाण परमेश्वरि ।
सर्वदेवोत्तमासि त्वमक्षयं देहि षष्ठिके ।।
अक्षतान् सम० ।

पुष्पाणि

ॐ सुमाल्यानि सुगन्धीनि मालत्यादीनि वै प्रभो ।
गृहाण वरदे देवि रक्ष बालं च सूतिकाम् ।।
पुष्पाणि समर्प० ।

धूपः

ॐ वनस्पत्युद्भवं धूपं दिव्यं स्वीकुरु देवि मे ।
प्रसीद सुमुखी भूत्वा रक्ष मे सुतसूतिके ।।
धूपं सम० ।

दीपः

ॐ आज्यं वर्तियुतं देवि ज्योतिषां ज्योतिरुत्तमम् ।
जीवन्तिके गृहाणेदं रक्ष मे सुतसूतिके ।।
दीपं सम० ।

नैवेद्यम्

ॐ अन्नं च षड्रसोपेतं नाना भक्ष्यसमन्वितम् ।
भुङ्क्ष्व देवि गुणैर्युक्तं रक्ष मे सुतसूतिके ।।
नैवेद्यं सम० ।

आचमनीयम्

ॐ उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः ।
शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम् ।।
आचमनीयं सम० ।

फलानि

ॐ इदं फलं मया देवि स्थापितं पुरतस्तव ।
तेन मे परितुष्टा त्वं रक्ष बालं च सूतिकाम् ।।

फलानि सम० ।

ताम्बूलम्

ॐ नागवल्लीदलं रम्यं पूगीफलसमन्वितम् ।
भद्रे गृहाण ताम्बूलं पाहि मे सुतसूतिके ।।

ताम्बूलं सम० ।

दक्षिणा

ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।।

दक्षिणां सम० ।

कर्पूरादिनीराजनम्

ॐ रम्भागर्भसमुद्भूतं कर्पूरं सुप्रदीपितम् ।
आरार्तिकमहं कुर्वे रक्ष मे सुतसूतिके ।

नीराजनं सम० ।

पुष्पाञ्जलिः

ॐ यथाकालोद्भवानां च चम्पकादिसुगन्धिनाम् ।
पुष्पाञ्जलिं गृहाणेमं रक्ष मे सुतसूतिके ।।

पुष्पाञ्जलिं सम० ।

प्रार्थना

ॐ लम्बोदर महाभाग सर्वोपद्रवनाशन ।
त्वत्प्रसादादविघ्नेश चिरं जीवतु बालकः ।।

जननी सर्वभूतानां बालानां च विशेषतः ।
नारायणीस्वरूपेण बालं मे रक्ष सर्वदा ॥

प्रेतभूतपिशाचेभ्यो डाकिनी योगिनीषु च ।
मातेव रक्ष बालं मे श्वापदे पन्नगेषु च ॥

षष्ठीदेवि नमस्तुभ्यं सूतिकागृहवासिनी ।
पूजिता परया भक्त्या दीर्घमायुः प्रयच्छ मे ॥

जननी सर्वसौख्यानां वर्धिनी धनसम्पदाम् ।
साधिनी सर्वभूतानां जन्मदे त्वां नता वयम् ॥

गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा ।
तथा ममाप्यमुं बालं षष्ठिके रक्ष ते नमः ॥

यथा दाशरथीरामश्चतुर्मूर्तिर्भवप्रदे ।
त्वया संरक्षितस्तद्वद् बालं पाहि शुभप्रदे ॥

विष्णुनाभिस्थितो ब्रह्मा दैत्येभ्यो रक्षितस्त्वया ।
तथा मे बालकं रक्ष योगनिद्रे नमोऽस्तु ते ॥

रक्षितौ पूतनादिभ्यो नन्दगोपसुतौ यथा ।
तथा मे बालकं पाहि दुर्गे देवि नमोऽस्तुते ॥

यथा वृत्रासुरादिन्द्रो रक्षितो दितिबालकः ।
त्वया तथा मे बालोऽयं रक्षणीयो महेश्वरि ॥

यथा त्वयाञ्जनीपुत्रो हनुमान् रक्षितः शिशुः ।
तथा मे बालकं रक्ष दुर्गे दुर्गतिहारिणि ॥

रुद्रः स्वर्गाद्यथा देवि कश्यपादिसुतास्त्वया ।
मातस्त्राहि तथा बालं विष्णुमाये नमोऽस्तु ते ॥

सर्वविघ्नानपाकृत्य सर्वसौख्यप्रदायिनि ।
जीवन्तिके जगन्मातः पाहि नः परमेश्वरि ॥

अनया पूजया विघ्नेशजन्मदाषष्ठीदेवीजीवन्तिकाशस्त्रगर्भाभगवत्यः प्रीयन्ताम् ।

ततः षष्ठिकायै बालनिवेदनम्

ॐ देवतानामृषीणां च भक्तानां भक्तवत्सले ।
अर्पितं रक्ष मे बालं महाषष्ठि नमोऽस्तु ते ॥
जननी सर्वभूतानां बालकानां विशेषतः ।
सुतं मे स्वसुतं मत्वा रक्ष रक्ष वरानने ॥
एवं रक्ष महाषष्ठि सदा त्वं विघ्ननाशिनी ।
बालं मम सदा रक्ष नित्यं सत्कुक्षिसंस्थितः ॥
सर्वभूतहिते मातर्जगतस्तूपकारिणि ।
सर्वतः षष्ठीरूपेण बालरक्षां कुरुष्व मे ।
षष्ठीदेवि महाभागे सर्वविघ्नविनाशिनी ।
अयं मम कुलोत्पन्नो रक्षार्थं तवपादयोः ॥
नीतो मया महाभागे चिरं जीवतु मे सुतः ।

## ततः स्कन्दपूजा

आदौ ध्यानम्

ॐ वराभयकरः साक्षाद् द्विभुजः शिखिवाहनः ।
किरीटी कुण्डली देवो दिव्याभरणभूषितः ॥

इति ध्यात्वा

ॐ द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनुयश्च पूर्वः । समानं ज्योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्तहोत्राः ॥

इति मन्त्रेण पाद्यादिभिरुपचारैः संपूज्य प्रार्थयेत्

ॐ नमः कुमाराय महाप्रभाय स्कन्दाय ते स्कन्दितदानवाय ।

नवार्कविम्बद्वितये नमोऽस्तु ते नमोऽस्त्वमोघोद्यतशक्तिपाणये ॥

ततः सूतिकागृहे सोपस्करं बलिं दद्यात्

ॐ क्षेत्रस्याधिपते देवि सर्वारिष्टविनाशिनि ।

बलिं गृहाण मे रक्ष क्षेत्रं सूतिं च बालकम् ॥

इमं सोपस्कर बलिं क्षेत्राधिपत्यै देव्यै समर्पयामि न मम । इति बलिं दत्त्वा अक्षतपुञ्जेषु गौर्यादिषोडशमातृः पूजयेत् १। तासां नामानि यथा–

ॐ गौरी पद्मा शची मेधा सावित्री विजया जया ।

देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥

---

१– कस्मिश्चित् पुस्तके मातृपूजासमनन्तरमेतानि कर्माणि समुपलभ्यन्ते

"वंशपूजा– ॐ सर्वमङ्गल माङ्गल्य गोविन्दस्य करे स्थितः ।
वंशं वर्धय मे वंश सदानन्द नमोऽस्तु ते ॥

खड्गपूजा– ॐ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।

षट्कृत्तिका पूजा अक्षतपुञ्जेषु

ॐ शिवायै नमः । ॐ सम्भूत्यै नमः । ॐ कीर्त्यै नमः । ॐ सन्नत्यै नमः । ॐ अनुसूयायै नमः । ॐ क्षमायै नमः । इति यथालब्धोपचारैः पूजयेत् ।

अथ सूत्राभिमन्त्रणम्

ॐ मनोजूतिः,ॐ सूर्यरश्मिः०,ॐ सोमो धेनुम्०,ॐ पितृभ्यःस्वधायिभ्यः, ॐ प्रजापतेन०, ॐ वातोवा०,ॐ नमः शम्भवाय०,ॐ त्रातारमिन्द्रम्०,ॐ नमोऽस्तु सर्पेभ्यः०, ॐ अग्निर्देवता०,ॐ ब्रह्म जज्ञानम् इति प्रतीकोक्तैर्मन्त्रैरभिमन्त्र्य 'ॐ रक्षोहणं वलगहनम्' इति मन्त्रेण बालकस्य कण्ठे धारयेत् ।

ततो वटुकाष्ठमालाभिर्वद्धग्रीवमजासुतं कर्णताडनेन पुनः पुनः महान् शब्दं कारयेत् ।
"ॐ भूतप्रेत पिशाचाश्च यातुधाना च शाकिनी । बालग्रहाश्च नश्यन्ति सच्छब्दाकर्णनाच्छ्रुतम् ॥
ततो द्वारदेशे अजबन्धनम् । ततः शस्त्रपाणयः सूतिकारक्षार्थं द्वारदेशे स्थापयेत् । ततः–
"ॐ मन्थान त्वं हि गोलोके देवदेवेन निर्मितम् । पूजितं च विधानेन सूतिरक्षां कुरुष्व मे ॥"
इति मन्त्रेण पाद्यादिभिरुपचारैर्मन्थानं पूजयेत् । ततो जातहारिणी मातृपूजा–
"ॐ जातं हरन्ति या बालं मातरो गूढविग्रहाः । अभिरक्षन्तु मे पुत्रं बलिपूजां हरन्तु ताः ॥"
इति यथालब्धोपचारैः पूजयेत् । इति विशेषः ।

धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवताः ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥

ततः सूतिकागृहाद्‌बहिरागत्य द्वारस्योभयतो मातृकाद्वन्द्वं लिखेत् । तन्नामानि यथा

ॐ धिषणा वृद्धिमाता च तथा गौरी च पूतना ।
आयुर्दात्र्यो भवन्त्वेता अद्य बालस्य मे शिवाः ॥

एता नाममन्त्रेण पञ्चोपचारैः सम्पूज्य सुवासिनी भोजनीया ।

ततो दक्षिणादानम्

ॐ अद्येत्यादि देशकालौ सङ्कीर्त्य मम अस्य समातृकस्य शिशोरायुरारोग्यप्राप्तिपूर्वकसकलारिष्टशान्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृताया विघ्नेशजन्मदाषष्ठीदेवीजीवन्तिकाशस्त्रगर्भाभगवतीपूजायाः साद्‌गुण्यार्थमिमां दक्षिणां सुवर्णं वह्निदैवतं तत्प्रत्याम्नायद्रव्यं रजतखण्डं चन्द्रदैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य यथाकाले दातुमहमुत्सृजे । इति सङ्कल्प्य ब्राह्मणेभ्यो दक्षिणां दत्वा तेषामाशिषो गृह्णीयात् । ततो 'यान्तु देव, गच्छ गच्छेति, च देवान् विसृज्य 'कायेन वाचा' इति कर्मेश्वरार्पणं कुर्यात् ।

॥ इति षष्ठिकादेवीपूजा ॥

शब्दार्थः

| | | | | | |
|---|---|---|---|---|---|
| १– कुड्यम् | = भित्तो | ५– षष्ठीदेवी | = बालक र सुत्केरीको रक्षा गर्ने देवी | | |
| २– सूतिका | = सूत्केरी | ६– जन्मदा | = | " " | " |
| ३– जातः | = जन्मेको | ७– जीवन्तिका | = | " " | " |
| ४– विघ्नेशः | = गणेश | ८– समर्पणम् | = सुम्पनु | | |
| | | ९– पोटलिका | = पोको | | |
| | | १०– काण्डेन | = बाणले | | |

अभ्यासः

प्रश्नाः

१– षष्ठीकर्म कदा कस्मिन्काले भवति ?

२– सूतिकापोटलिकायां स्थाप्यवस्तूनि कानि ? तस्य कर्तव्यकर्माणि च कानि ?

३– षष्ठिकाध्यानमन्त्रं पूरयत ।

४– 'अन्नं च षड्रसोपेतं' अस्य मन्त्रस्य कुत्र विनियोगः ? इत्युल्लिख्य मन्त्रं च पूरयत ।
५– गौर्यादिषोडशमातृनामानि ग्रन्थानुसारेण लेखनीयानि ।

**प्रयोगात्मकः प्रश्नः**

६– षष्ठिकाया आवाहनादि दक्षिणापर्यन्तप्रयोगं यथाक्रमं प्रदर्शयत ।

## षस्ठिकापूजाको सामग्री

सामान्यपूजा सामग्री भाग–१ । दियो । कलश । गणेश । कर्मपात्र । सर्स्यूं । रायो । गोबर । दही अक्षता । फूल । दूवो । पञ्चामृत । रातो, सेतो, पहेंलो वस्त्र । अर्घत्रिकुटी । रोटी नैवेद्य । फलफूल । पानमसला । खड्ग । ठेकी मदानी । बोको ।

# नामकरणे नामविचारः

## (भभोगानयनार्थमिष्टघटीपलानयनम्)

(भभोगानयनात्पूर्वमिष्टघटीपलाज्ञानस्यावश्यकत्वादादौ इष्टघटीपलाऽऽनयनरीतिरत्र प्रस्तूयते)

## (क) इष्टघटीपलाऽऽनयनम्

२०३६ विक्रमसंवत्सरे वैशाखमासस्य विंशतितमेदिवसे (दिन २० गते) सोमवासरे दिवसस्य १०।२५ वादने यः कोऽपि बालको जातः। तस्य बालकस्य जन्मकालिकघण्टामिनेटानां घटीपलासु परिवर्तनं कर्तव्यम्। परिवर्तनक्रमश्चायम्

जन्मकालिकघण्टामिनेटेषु सूर्योदयकालिकघण्टामिनेटान् विशोध्य पञ्चभिर्गुणनं विधाय द्वाभ्यां विभजेत्। जन्मकालिक घटीपला भवति।

उदाहरणं यथा

जन्मकालिकघण्टामिनेटाः– १०।२५

तद्दिनस्य सूर्योदयकालिकघण्टामिनेटाः– ५।२७

जन्मकालिकघण्टामिनेटात् सूर्योदयकालिकघण्टामिनेटानां शोधने १०।२५–५।२७=४।५८ भवति।

अस्य पञ्चभिर्गुणिते ४।५८×५=२४।५० भवति।

पुनर्द्वाभ्यां विभाजिते २४।५०÷२=१२।२५ भवति।

अतः इष्टघटीपला १२।२५ अभवत्

इममेव केचन 'इष्टकालः' इति केचन 'इष्टसमयः, 'इष्टघटी' इति च कथयन्ति।

इतीष्टघटीपलानयनम्।

## (ख) अथ भभोगानयनम्

'गतर्क्षनाडयः खरसेषु शुद्धा निजर्क्षनाडयः सहिता भभोगः ।
निजर्क्षनाडयूनितशुद्धयुग्वा सूर्योदयाद्या घटिका भयातः ॥

अर्थात् स्वजन्मनक्षत्रात् पूर्ववर्तिनक्षत्रस्य घटीपलादिकं षष्टिसंख्यायां विशोध्य स्वनक्षत्रस्य घटीपलादिकं योजनीयम् । स भभोगो भवतीत्यर्थः ।

अस्य श्लोकस्य पूर्वार्धेन भभोगमानयन्ति, उत्तरार्धेन च भयातमानयन्ति। उदाहरणं यथा

उपर्युक्त वैशाखमासस्य विंशतितमे दिवसे पूर्वाफाल्गुनी नक्षत्रं वर्तते । तस्य नक्षत्रस्य घटीपला च ३५।३२ अस्ति । इष्टघटिका १२।२५ वर्तते । अतः पूर्वाफाल्गुनीनक्षत्रं स्वजन्मनक्षत्रमभवत् । जन्मदिवसस्य पूर्वदिने मघानक्षत्रं, तस्य घटीपला च ३६।३१ वर्तते । अतः स्वनक्षत्रस्य पूर्ववर्तित्वात् मघानक्षत्रं गतर्क्षमभवत् । षष्टिसंख्यायां गतर्क्षघटीपलाशोधने ६०–३६।३१=२३।२९ भवति । तत्र २३।२९ संख्यायां निजर्क्षनाडीयोगे अर्थात् पूर्वाफाल्गुनीनक्षत्रस्य घटीपलायोगे २३।२९+३५।३२=५९।१ भवति ।

पूर्वाफाल्गुनीनक्षत्रस्य यावद् भोग्य घटीपला ५९।१ अभवत् । अस्यैव नाम भभोग इति । इति भभोगानयनम् ।

## (ग) भयाताऽऽनयनम्

"निजर्क्षनाडयूनितशुद्धयुग्वा सूर्योदयाद्या घटिका भयातः ।

अर्थात् षष्टिसंख्यायां पूर्ववर्तिनक्षत्रस्य घटीपलाशोधनेनागतेषु अंकेषु (स्वनक्षत्रस्यैव घटीपलासु इत्यर्थः) इष्टघटीपलादिकं योजयेत् । सः भयातो भवति ।

उदाहरणं यथा

गतर्क्षस्य (स्वजन्मनक्षत्रात्पूर्ववर्ति नक्षत्रस्य) घटीपलासंशोधनेन आगतोऽङ्कः २३।२९ वर्तते ।

इष्टघटीपला ११।२५

अनयोर्योगः २३।२९+१२।२५=३५।५४ भवति । अस्यैव नाम भयात इति ॥

## ॥ इति भयातानयनम् ॥

**शब्दार्थः**

१. नामकरणे नामविचारः=नाम जुराउने

२. इष्टघटीपलानयनम्=जन्मकालको घण्टामिनेटलाई परिवर्तन गरेर घडीपलामा ल्याउनु ।

३. भभोगानयनम्=जन्मनक्षत्रको जम्मा भोग गर्ने घडीपला ल्याउनु ।

४. भयातानयनम्=बालक जन्मदा जन्मनक्षत्रले भोगगरिसकेको घडीपला ल्याउनु ।

## अभ्यासः

**प्रश्नाः**

१. इष्टघटीपलानयनविधिः कः ? ग्रन्थाधारेण लिखत ।

२. भभोगानयनरीतिर्यथाग्रन्थं प्रदर्शनीया ।

३. भयतानयनक्रमः कः ।

## नक्षत्रस्य चरणाधारेण नाम्न आद्यक्षर निश्चयः

(नाम्न आद्यक्षरं निश्चेतुं 'अ.व.क.हड' चक्रज्ञानस्यावश्यकत्वात्तच्चक्रमत्र प्रस्तूयते)

राशिज्ञानसहितं

अ० व० क० हडचक्रम्

| अक्षराणि | नक्षत्रम् | राशिः | अक्षराणि | नक्षत्रम् | राशिः |
|---|---|---|---|---|---|
| चू चे चो ला | – अश्विनी | | रा री | – चित्रा | |
| ली लू ले लो | – भरणी | मेषः | रू रे रो ता | – स्वाती | तुला |
| आ.... | – कृत्तिका | | ती तू ते | – विशाखा | |
| ई उ ए | – कृत्तिका | | तो.. | – विशाखा | |
| ओ वा वी वु | – रोहिणी | वृषः | ना नी नू ने | – अनुराधा | वृश्चिकः |
| वे वो.... | – मृगशिरा | | नो या यी यू | – ज्येष्ठा | |
| का की.. | – मृगशिरा | | ये यो भा भी | – मूलम् | |
| कू घ ङ छ | – आर्द्रा | मिथुनः | भू ध फ ढ | – पूर्वाषाढा | धनुः |
| के को हा | – पुनर्वसू | | भे | – उत्तराषाढा | |
| ही .. | – पुनर्वसू | | भो जा जी | – उत्तराषाढा | |
| हू हे हो डा | – तिष्यः | कर्कटः | खी खू खे खो | – श्रवणः | मकरः |
| डी डू डे डो | – अश्लेषा | | गा गी | – धनिष्ठा | |
| मा मी मू मे | – मघा | | गू गे .. | – धनिष्ठा | |
| मो टा टी टू | – पूर्वाफाल्गुनी | सिंहः | गो सा सी सू | – शतभिषा | कुम्भः |
| टे.... | – उत्तराफाल्गुनी | | से सो दा | – पूर्वाभाद्रः | |
| टो पा पी | – उत्तराफाल्गुनी | | दी .... | – पूर्वाभाद्रा | |
| पू ष ण ठ | – हस्तः | कन्याः | दू थ झ ञ | – उत्तराभाद्रः | मीनः |
| पे पो | – चित्रा | | दे दो चा ची | – रेवती | |

# पञ्चगव्यविधिः[1]

ॐ तत्सवितु० । इति मन्त्रेण गोमूत्रमादाय एकस्मिन् ताम्रपात्रे क्षिपेत् ।

---

१– गहुँत मन्त्रने विधि ।

तत्रैव

ॐ गन्धद्वारान्दुधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।।

इति मन्त्रेण गोमयं क्षिपेत् ।

ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य सङ्गथे ।।

इति मन्त्रेण दुग्धं क्षिपेत् ।

ॐ दधिक्राव्णो ऽ अकारिषञ्जिष्णोरश्वस्य वाजिनः ।
सुरभिनो मुखाकरत्प्रण ऽ आयूꣳषि तारिषत् ।।

इति मन्त्रेण दधि क्षिपेत् ।

ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्रियं देवाना
मना धृष्टन्देवयजनमसि ।।

इति मन्त्रेण घृतं क्षिपेत्

ॐ देवस्य त्वा सवितुःप्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।
अग्नये जुष्टं गृह्णाम्यग्निषोमाभ्याञ्जुष्टं गृह्णामि ।

इति मन्त्रेण कुशोदकं प्रक्षिप्य कुशदूर्वादिभिः सर्वमेकत्र सम्मेल्य
'ॐ' इति प्रणवेन सप्तवारमभिमन्त्र्य,

ॐ यत्त्वगस्थिगतं पापं देहे तिष्टति मामके ।
प्राशनात्पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ।

इति प्राशयेत् ।

।। इति पञ्चगव्यविधिः ।।

# नामकरणसंस्कारः[१]

## (क) अग्निस्थापनविधिमनुसृत्य वनस्पत्यन्तहवनम्

पञ्चभूसंस्कारादि स्थण्डिलसंस्कारः, अग्निसंस्कारः, ब्रह्मोपवेशनम्, ब्रह्मवरणम्, पात्रासादनम्, ब्राह्मणवरणम्, पुण्याहवाचनम्, दीपकलशगणेशपूजनम्, होमसंकल्पः, आघाराज्यभागमहाव्याहृतिहोमपूर्वकं पञ्चवारुणीहोमः । गणपत्यादिवनस्पत्यन्त-होमश्च अग्निस्थापनपद्धतिमाश्रित्य यथाविधि सम्पादयेत् ।

## (ख) शण्डामर्कहवनम्

जन्मदिनादारभ्य दशदिनपर्यन्तस्य दिनसंख्यया प्रतिदिनमाहुतिद्वयक्रमेण 'शण्डा-मर्का, आलिखन, इति द्वाभ्यां मन्त्राभ्यां तन्डुलकणमिश्रसर्षपान् जुहुयात्

ॐ शण्डामर्का इति प्रजापतिऋषिस्त्रिष्टुप्छन्दः शण्डामर्को देवता फलीकरण-मिश्र सर्षपहोमे विनियोगः ।

**ॐ शण्डामर्का उपवीरः शौण्डिकेय उलूखलः। मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा ।**

इदं शण्डामर्काय उपवीराय शौण्डिकेयाय उलूखलाय मलिम्लुचाय द्रोणेभ्य-श्च्यवनाय न मम ।

ॐ आलिखन्निति प्रजापतिऋषिस्त्रिष्टुप्छन्द आलिखतादेवता फलीकरणमी-श्रसर्षपहोमे विनियोगः ।

---

१– मदनरत्ने नारद

"सूतकान्ते नामकर्म विधेयं स्वकुलोचितम्" इति । गोभिलगृह्यसूत्रे– 'दशरात्रे व्युष्टे नामकरणं' इति । याज्ञवल्क्यः– 'अहन्येकादशे नाम' इति । 'दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति' इति पारस्करवचनाच्च प्रसवादेकादशेऽहनि नामकरणम् ।

ॐ आलिखन्ननिमिषः किंवदन्त उपश्रुतिः । हर्यक्षः कुम्भी-शत्रुः पात्रपाणिर्नृ मणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा ॥

इदमालिखतेऽनिमिषाय किंवदद्भ्य उपश्रुतये हर्यक्षाय कुम्भीशत्रवे पात्रपाणये नृमणये हन्त्रीमुखाय सर्षपारुणाय च्यवनाय न मम । इति ।

# (ग) नामकरणम् (नामश्रावणम्)

ॐ अद्येत्यादि देशकालौ स्मृत्वा अस्य शिशोर्बिजगर्भसमुद्भवैनोनिबर्हणायुरभि-वृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामकरणं करिष्ये । इति प्रतिज्ञाय पिप्पलपत्रद्वये सुवर्णशलाकया चन्दनादिना जन्मनक्षत्रपादप्रयुक्ताक्षरादि नाम लिखित्वा– "अस्य शिशोर्बह्वायुष्यप्राप्त्यर्थं नामदेवतापूजनं करिष्ये, इति सङ्कल्प्य, ॐ मनो जूतिरिति प्रतिष्ठाप्य, ॐ नामदेवताभ्यो नमः । इति षोडशोपचारैः, सम्पूज्य स्वदक्षिणस्थमातुरूत्सङ्गस्थस्य शिशोर्दक्षिणे कर्णे 'हे कुमार ! त्वम् अमुकशर्मा असि' इति नाम श्रावयेत् । क्षत्रियश्चेत्– ( अमुकवर्मा ) इति । वैश्यश्चेत्– (अमुकगुप्त) इति ।

नामकरणे विशेषः– द्व्यक्षरं चतुरक्षरं वा नाम कुर्यात् । घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम् । अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम् ।

अर्थात् आदौ घोषवर्णयुतं मध्ये अन्तस्थवर्णयुतं अवसाने गुरुवर्णयुतं कृत्प्रत्ययान्तं (भद्रकारि) इत्यादि चतुरक्षरं नाम । स्त्रिया विषमवर्णयुतं तद्धितप्रत्ययान्तमा-कारान्तं नाम कुर्यादिति ।[1]

---

१– नामकरणे दाक्षिणात्यानामयं शिष्टाचारः

कांस्यपात्रे तण्डुलान् प्रसार्य पिप्पलपत्रचतुष्टये सुवर्णशलाकया (१)–देवतानाम = कुल-देवताप्रयुक्तं नाम 'अमुकभक्तः' इत्यादि । (२)–मासनाम = कृष्णः, अनन्त इत्यादि । (३)– नक्षत्रनाम = जन्मनक्षत्रपादप्रयुक्ताक्षरादि । (४)– व्यवहारनाम चेत्थं नाम चतुष्टयं लिखित्वा नाम श्रावणमिति ।

# (घ) उत्तराङ्गकर्म

ततश्चतु: स्वस्त्यादिपूर्णाहुतिहोमान्तमवशिष्टहोमं समाप्य पूर्णपात्रम्, मेधाहोम:, शेषचरुहोम:, गोदानम्, दक्षिणासङ्कल्पश्चेत्यादि सर्वमप्युत्तराङ्गकर्म अग्निस्थापनपद्धतिमनुसृत्य समापयेत् ।

# (ङ) सूर्यपूजनं दर्शनं च[1]

ततो गृहाद्बहि: प्राङ्गणादौ गोमयेन कुण्डं निर्माय तत्र अर्घस्थापनपूर्वकं 'ॐ आकृष्णेन, इति मन्त्रेण पाद्यादिभि रुपचारै: सूर्यं सम्पूज्य अर्घ्यं च दत्त्वा पिता कुमारं सूर्यं दर्शयति ॐ तच्चक्षुरिति' मन्त्रेण ।

॥ इति नामकरणसंस्कार: ॥

शब्दार्थ:

१– आश्रित्य = आधार लिएर ।
२– अनुसृत्य = अनुसरण गरेर (पछि लागेर)
३– तन्डुलकण: = कनिका ।
४– शलाका = छेस्को (कलम)
५– अयुजाक्षरम् = विजोर अक्षर
६– उत्सङ्ग: = काख ।
७– दाक्षिणात्या = दक्षिणदेशवासी ।
८– सर्षप: = सर्स्यूं
९– शण्डामर्क: = शण्ड र मर्क नाम गरेका दैत्यका गुरु

प्रश्ना:

अभ्यास:

१– नामकरणसंस्कारे विधेयानि विशेषकार्याणि कानि ?
२– शण्डामर्क होममन्त्रौ कौ ? उभावपि लेखनीयौ ।
३– नामश्रावणे विधिविशेषं प्रदर्शयत ।
४– स्त्रिया नामकरणे विशेषविधिं विलिखत ।
५– सूर्यदर्शनप्रयोगं लिखत ।

## नामकरण संस्कारको सामग्री

माथि सामान्य अग्निस्थापना होममा बताइएका सामग्रीहरू सबै । कनिका । सर्यूं । पञ्चगव्य । नाउँ लेख्ने पीपलका पात । नाउँ राख्ने चामल, वस्त्र, जनै, सुपारी ऋतुफल, पान इत्यादि ।

---

१– यद्यपि निष्क्रमणसंस्कार अरू संस्कारहरू जस्तै पृथक संस्कार हो । यो संस्कार 'चतुर्थे मासि निष्क्रमणिका' यस वचन अनुसार बालक जन्मेको चौथो महिनामा गर्नुपर्ने हो तर आजभोलि चौथो महिनामा नगरेर एघार दिनमा न्वारनकै दिनमा गर्ने गरिएको छ । कसैले यसलाई 'अन्न प्रासनकाले वा' भनेर अन्नप्राशन गर्दा निष्क्रमण संस्कार गर्नु भनेको छन् । संस्कार जुनसुकै पनि एक पल्ट गरेपछि दोहोर्‍याउन पर्दैन ।

# अन्नप्राशनसंस्कारः[1]

## (क) दीपकलशगणेशपूजा

पिता सभार्यः शिशुना सह मङ्गलस्नानं कृत्वा अहते वाससी परिधाय आसने उपविश्याचम्य कर्मपात्रं विधाय कुशतिलजलान्यादाय

ॐ अद्येत्यादि देशकालौ स्मृत्वा ममास्य शिशोर्मातृगर्भमलप्राशनशुद्ध्यर्थं ममाद्य ब्रह्मवर्चसतेजइन्द्रियायुर्बललक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं दीपकलशगणेशपूजनपूर्वकमन्नप्राशनाख्यकर्माहं करिष्ये । इति प्रतिज्ञा कङ्कल्पं विधाय ब्राह्मणान् वृत्वा पुण्याहं वाचयेत्[2] ।

ततः ॐ नमोऽस्त्वनन्तायेत्यादिना दीपं सम्पूज्य, ॐ गणानान्त्वेत्यादिना गणेशं सम्पूज्य, कलशस्थापनविधिना कलशं संस्थाप्य पूजयेत्[3] ।

## (ख) अन्नप्राशनम्

भूमौ प्रस्थमितं धान्यं संस्थाप्य तदुपरिश्वेतवस्त्रं प्रसार्य तत्र भद्रासनं स्वस्तिकासनं वा विलिख्य बालकमुपवेशयेत् ।

ततः सर्वान् रसान् सर्वमन्नं चैकस्मिन् पात्रे उद्धृत्य तुष्णीं 'ॐ हन्त' इति मन्त्रेण वा सकृदेव कुमारं प्राशयेत् । कुमार्या अमन्त्रकं कुर्यात् ।

---

१– अन्नप्राशनकालः– "जन्मतः षष्ठे मासे कुमारस्यान्नप्राशनं कर्म कुर्यादिति कुमार्याः पञ्च–मादि ओजमासे इति च"

२– वरणपुण्याहवाचनप्रयोगः अग्निस्थापनपद्धतौ ३३ पृष्ठतो द्रष्टव्यः ।

३– दीपकलशगणेशपूजाविधिः ३७ पृष्ठतो द्रष्टव्यः ।

ततो ब्राह्मणाय दक्षिणां दत्त्वा देवान् विसर्जयेत् । ततो । ततो ब्राह्मण-भोजनम् । इत्यन्नप्राशनम् १ ।

## (ग) निष्क्रमणम्

कुमारस्य जन्मतश्चतुर्थे मासि गृहाद्बहिर्नयनं ( निष्क्रमणं ) कार्यम् । 'अन्नप्राशनकाले वा' इति वचनादन्नप्राशनान्तरं पिता कुमारं गृहाद्बहिर्निष्क्रामयेत् । तच्च नामकरणप्रकरणप्रोक्तविधिवत् 'आकृष्णे नेति' मन्त्रेण पाद्यादिभिरुपचारैः सूर्यं सम्पूज्य 'ॐ तच्चक्षुरिति' मन्त्रेण पिता कुमारं सूर्यं दर्शयेत् । इति निष्क्रमणम् ।

---

१– अन्नप्राशनस्य होमपूर्वकोविधिः सूत्रानुसारेणात्र प्रस्तूयते

"कुमारस्य षष्ठे मासे चन्द्रतारानुकूले शुभे दिने मातृपूजापूर्वकं नान्दीमुखश्राद्धं विधाय पञ्चभूसंस्कारान् कृत्वा लौकिकाग्निं स्थापयित्वा ब्रह्मोपवेशनाद्याज्यभागान्तं विदध्यात् । तत्र आज्येन–ॐ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु स्वाहा । इति प्रथमाम् । इदं वाचे इति त्यागं विधाय पुनर्देवीं वाच-मित्येतस्यान्ते, ॐ वाजो नोऽअद्य प्रसुवाति दानं वाजो देवाँऽ२ ऋतुभिः कल्पयाति । वाजो हि मा सर्ववीरं जजान विश्वाऽआशा वाजपतिर्जयेय ꣳ स्वाहा । इति द्वितीयामाहुतिं हुत्वा इदं वाचे वाजाय चेति त्यागं कुर्यात् ।

अथ स्थालीपाकेन चतस्र आहुतिर्जुहोति । तद्यथा– ॐ प्राणेनान्नमशीय स्वाहा । इदं प्राणाय० । ॐ अपानेन गन्धानशीय स्वाहा । इदमपानाय० । ॐ चक्षुषा रूपाण्यशीय स्वाहा । इदं चक्षुषे० । ॐ श्रोत्रेण यशोऽशीय स्वाहा । इदं श्रोत्राय० । ततः स्थालीपाकेन स्विष्टकृतं हुत्वा महाव्याहृत्यादि प्राजापत्यान्तानवाहुतिराज्येन हुत्वा संस्रवप्राशनं दक्षिणादानान्तं कृत्वा सर्वान् रसान् सर्वं चान्नमेकस्मिन् पात्रे उद्धृत्य सकृदेव कुमारं तुष्णीं प्राशयेत् 'हन्त' इति वा मन्त्रेण ।

स यदि कुमारस्य वाग्मित्वमिच्छेत् तदा भारद्वाज्या मांसं प्राशयेत् "यद्यन्नाद्यत्वं कामयेत तदा कपिञ्जलमांसं, यदि जवनत्वं तदा मत्स्यमांसं यदि दीर्घायुष्ट्वं तदा कृकषायाः मांसं, यदि ब्रह्मवर्चसं तदा –आद्यामांसं, यदि सर्वकामस्तदा सर्वमाँसानि क्रमेण प्राशयेत्, एकीकृत्य वा । अस्य कर्मणः समृद्धयर्थं ब्राम्हणमेकं भोजयिष्ये । इति सङ्कल्प्य ब्राम्हणं भोजयेत् । कुमार्या अप्येतद-मन्त्रकं कार्यम् । " इति ।

# (घ) जीविकापरीक्षा

अन्नप्राशनादि सर्वाण्यपि कर्माणि समाप्य देवताग्रे बालं भूमौसमुपवेश्य तस्याग्रे पुस्तकम्, लेखनीम्, स्वर्णम्, रौप्यम्, वस्त्रम्, शस्त्रम्, शिल्पभाण्डानि, मृदादिकं च स्थापयित्वा जीविकापरीक्षां कुर्यात् । तत्र प्रमाणं यथा

तस्मिन् काले स्थापयेत्तत्पुरस्ताद्वस्त्रं शस्त्रं पुस्तकं लेखनीं च ।
स्वर्णं रौप्यं यच्च गृह्णाति बालस्तैराजीवैस्तस्या वृत्तिः प्रदिष्टा ॥

मु. चि. सं. प्र. २२ श्लो. ।

तत्र शिशुः स्वेच्छया यद्वस्तु प्रथमं स्पृशेत् सा अस्य जीविकेति विद्यात् । इति जीविकापरीक्षा ।

# (ङ) देवदर्शनम्

अन्नप्राशनं जीविकापरीक्षां च समाप्य धात्र्या अथवा कुले या वृद्धा भवति तया स्वकीये पीठे कुमारं स्थापयित्वा यत्र कुत्रापि देवमन्दिरे देवदर्शनार्थं वाद्यघोषादि मङ्गलयात्रापूर्वकं नयेत् । तत्र नीत्वा देवं पाद्यादिभिरुपचारैर्यथाविधिः संपूज्य कुमारं देवदर्शनं कारयेत् । इति देवदर्शनम् ।

॥ इत्यन्नप्राशनसंस्कारः ॥

**शब्दार्थः**

१– अहते वाससी = पछारेको नयाँ धोती र उपर्ना ।
२– प्रस्थमितम् = एक पाथी ।
३– तूष्णीम् = चूप लागेर ।
४– सकृत् = एक पल्ट ।
५– अमन्त्रकम् = मन्त्र नपढीकन ।
६– धात्र्या = धाईले ।
७– शिल्पभाण्डानि = भाँडाकुँडा ।
८– पीठे = पीठ्यूँमा ।
९– स्थापयित्वा = बोकेर ।
१०– स्वेच्छया = आफ्ना इच्छाले

अभ्यासः

**प्रश्नाः**

१– बालकं कुत्र कथमुपवेश्यान्नं प्राशयन्ति ?
२– अन्नप्राशनप्रकारः कः ? इति यथाग्रन्थं स्पष्टीक्रियताम् ।
३– निष्क्रमणकालं निर्दिश्य विधिश्चोल्लेख्यः ।
४– जीविकापरीक्षाया इतिकर्तव्यता वर्णनीया ।

## अन्नप्राशनको सामग्री

सामान्य पूजासामग्री भाग–१ । कर्मपात्र । अर्घ त्रिकुटी । दियो । कलश । गणेश । पञ्चामृत । धूप । बत्ती । कपूर । रोटी नैवेद्य । फलफूल । रातो सेतो वस्त्र । फूल । दूवो । माला । बालकलाई लाउने लुगा गहना । १ पाथी धान । भद्रासन वा स्वस्तिकासन लेख्ने सेतो कपडा । ख्याउनाको लागि ८४ व्यञ्जन । इत्यादि ।

## भद्रासनम्



## समूह गायनमा गाउने राष्ट्रिय गीत

हट्ने होइन डटी लड्ने नेपालीको बानी हुन्छ
कहिले नझुक्ने शिर उभेको स्वाभिमानी नेपाली हुन्छ
विश्वको कुना काप्चामा खोज, नेपालीको मुटुमा खोज
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ . . . २
श्रीपेचको नवै रङ्ग डाँफे चरीले बोकेर उड्छ
एकता अनि वीरताको गाथा सारङ्गीले गाउँदै हिंड्छ
खुकुरीको डोबभित्र वीरहरूको पाइला हुन्छ
पर्वतराज हिमालमुनि गुराँस त फुलेको हुन्छ
गुराँसको रङ्ग हेर, त्यो पनि त रातो हुन्छ
हाम्रो मुटुको रगत हेर, त्यो पनि त रातो हुन्छ
रातो रङ्ग सिम्रीकको रङ्ग, चन्द्र सूर्य झण्डाको रङ्ग, त्यो पनि त रातो हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ . . . २
हाम्रो मादल शान्तिको लागि मरुभूमिमा परेड खेल्छ
स्वयम्भूको दुइटा आँखाले न्याय अन्याय छुट्याई हेर्छ
बाँच र बचाऊ भन्ने छातिभित्र कुँदिएको हुन्छ
ठेला उठेको हातमा हेर, पसीना त बगेको हुन्छ
पसीनाको नदी हेर, त्यो पनि त नीलो हुन्छ
हामी माथिको आकाश हेर, त्यो पनि त नीलो हुन्छ
नीलो रङ्ग शान्तिको रङ्ग, हाम्रो झण्डाको किनारको रङ्ग, त्यो पनि त नीलो हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ
त्यहाँ सिङ्गो नेपाल हुन्छ, त्यहाँ राजा रानी हुन्छ

**कर्म काण्ड कक्षा ९ र १०**

